तत्रास्ति किं भक्तिरितीह चिन्त्यतां सहिष्णुरेवैति समग्रभक्तिम् ।
यस्मिंश्च तुष्टो गुरुसंगमेशस्तेनैव साकं रसतामुपैति ॥

Does devotion come by empty words ? If one does not physically serve the realised person and does not mentally think of the Impersonal Being and if one's wealth is not spent for the service of the deserving persons, can one realise devotion ? If Kudalasangamadeva is pleased with a devotee, He will be at home with him. Can devotion be realised unless one practises patience in life ?

क्रियेयिल्लद भक्त मनुज, क्रियेयिल्लद जंगम राक्षस, क्रिये इल्लद प्रसादि यवन, क्रियेयिल्लद प्राणलिंगि भवि, क्रियेयिल्लद शरण अज्ञानि, क्रियेयिल्लद लिंगैक्य जननक्कोळगु नोडा, कूडल चन्नसंगमदेव ॥ ८ ॥

भक्तो विहीनः क्रियया हि मर्त्यस्तथैव हीनः खलु जंगमोऽसुरः ।
तथा प्रसादी यवनस्तया विना तयाऽसुलिंगी भवति ध्रुवं भवी ॥
क्रियां विनासौ शरणोऽज्ञतां व्रजेल्लिंगैक्यमाप्तः क्रियया विहीनः ।
तथैव जन्मान्तरमाप्नुतेऽसौ न युज्यते कूडलचन्नसंगे ॥

The devotee without action is just an animal. The Jangama (disinterested and enlightened soul) without action is a demon.

The Prasadi (blessed soul) without action is a yavana. The Pranalingi (realised soul) without action is a bhavi. The Sharana (surrendered soul) without action is a boor. The Lingaikya (one united with Parabrahman) without action is a mortal liable to rebirths and deaths.

भक्तिरपि ज्ञानावलंबिनी उपासनरूपा क्रियैव. 'परमेश्वरः सर्वज्ञत्वात् सर्वशक्तत्वाच्च मत्त उत्कृष्टः, अत एव सः मदाश्रयणीयः' इत्येतद्ज्ञानमाश्रित्य तदीया सेवा यत्र प्रवर्तते तत्रैव भक्तिर्विलसति। अनयैव भक्त्या परमात्मसाक्षात्काररूपोऽनुभाव अनुभूयते भक्तैः। अयमाशय एवमुपवर्ण्यतेऽत्र—

भक्तिगे अनुभाववे बीज काणिरो। भक्तिगे अनुभाववे आचरणे काणिरो। भक्तिगे अनुभाववे सकलैश्वर्यद शृङ्गार काणिरो। वीरशैवाचारसंपन्नरेनिसुव परमसद्भक्तरिगे अनुभाववे अरुविन गोत्तु काणिरो। अदु कारण अनुभावविल्लदवन भक्ति एल्लतटगोळिसित्तु। अनुभाववनरियदव कामुक काणिरो। आ महानुभावव माडुवल्लि सकलसञ्चलवळिदु विनयदिन्दे केळ-दिर्दोडे नम्म कूडलचन्नसङ्गमदेवरु अघोरनरकदल्लिक्कदे माण्बने ? ॥९॥

भक्तेश्च बीजं ह्यनुभाव एव स एव तस्या वचनं विभूषणम्।
ये वीरशैवाः क्रियया विभूषितास्तेषां स एवानुभवस्य लांछनम् ॥

तदीययुक्ताचरणेन चापलं विहाय संयम्य न वर्तते चेत् ।
ततश्च यः स्याद्विमुखोऽनुभावात् भक्त्या दरिद्रः स भवेत्कळङ्की ॥
पश्यन्तु सर्वे च तदीयशक्तिं येनैव हीनः खलु कामुकः स्यात् ।
तदैव किं कूडलचन्नसङ्गः न पातयेद्धीकरनारके तम् ॥

Realisation is the origin of devotion. It is the exposition of devotion. It is the end and aim of devotion, and hence its ornament. Devoted Virasaivas find all their riches in realisation. Without realisation, man remains only a hyprocrite. If one does not seek realisation with single-minded devotion, Lord Sangamesha will not bestow His grace.

वेदव नोडि वेदाध्ययनव माडिदरेनु? ब्राह्मणनागबल्लने? ब्रह्मवेत्तृगळ शुक्लशोणितदिन्द जनिसिदरेनु ब्राह्मणनागबल्लने? यजनादिकर्मङ्गळ बिडदे माडिदरेनु ब्राह्मणनागबल्लने? 'ब्रह्म जानातीति ब्राह्मणः' एंबन्ते ब्रह्मवादातने ब्राह्मण नोडा, कपिलसिद्ध मल्लिकार्जुन ॥ १० ॥

वेदांश्च दृष्ट्वा पठनाच्च तेषां विप्रः कदाचिद्भविता नु लोके ।
ब्रह्मज्ञवीर्याज्जनिमात्रतः किं विप्रत्वमेयादिह कोऽपि लोके ॥
षट्कर्मनिष्पादनमात्रतः किं ब्राह्मण्यमाप्नोति कदापि कोऽपि ।
यो ब्रह्मसाक्षात्कुरुते स एव ब्रह्मस्वरूपी खलु मल्लिकार्जुनः ॥

Does learning and reciting the Vedas make a Brahmin? Does birth in a religious Brahmin ancestry make a Brahmin? Does the mere performance of the prescribed Shatkarmas make a Brahmin. It can never be so. Only he who has realised Brahman in oneself and can realise. He same in others can be said to be a Brahmin and he will be no other than Kapila Siddha Mallikarjuna Himself.

एल्ल एल्लवनरिदु फलवेनय्य तन्न तानरियवेकल्लदे? तन्नल्लि अरिवु स्वयवागिरलु अन्यर केळलुण्टे? चन्नमल्लिकार्जुन, नी अरिवागि मुन्दुदोरिदकारण निम्मिन्दलरिदेनय्य प्रभुवे ॥११॥

विज्ञाय सर्वं किमिहास्ति लभ्यं स्वमेव जानाति न चेत्स्वयं हि ।
स्वस्मिन्स्वयं ज्ञानमिहैव भाति किमर्थमन्यः परिपृच्छ्यतेऽत्र ॥
भवत्प्रसादात्प्रभुमल्लिकार्जुन चिदैक्यबोधो ननु लभ्य एषः ।

What is the good of seeking to know all sorts of things without knowing oneself. When one has inherent knowledge, one need not ask another. O Lord Channa Mallikarjuna, you as knower showed me the path and so I attained knowledge from You.

निम्मल्लि नीवु तिळिदु नोडिदरे अन्यविल्ल काणिरण्ण,

अरिवु निम्मल्लिल्लये तद्गतवागिदे. अन्यभावव नेनेयदे तन्नोळगे ताने इरबल्लरे तन्नल्लिल्लये तन्मय गुहेश्वरलिंगवु ॥ १२ ॥

युष्मासु यूयं सुविविन्त्य पश्यत चिन्मात्रमेतद्भवदीयरूपम् ।
तदन्यभावं परिहृत्य नित्यं स्वस्मिन्स्वयं दृष्टिरवाप्यते चेत् ॥
तदानुभूयेत भवद्भिरेव गुहेश्वराख्यं परलिंगमत्र ॥

If you examine yourself introspectively you will find your Lord within yourself. You should not seek Him outside yourself. He exists only if you realise Him within you and not outside.

क्रियामथनविल्लदे काणबन्दुदे इक्षुबिनोळगण मधुर? क्रियामथनविल्लदे काणबन्दुदे क्षीरदोळगण तुप्प? क्रियामथनविल्लदे काणबन्दुदे काष्ठदोळगण अग्नि? इदुकारण गुहेश्वरलिङ्गव तन्नोळरिदेनॆंब महान्तङ्गे सत्क्रियाचरणेये साधने काणि भो ॥ १३ ॥

माधुर्यमिक्षोरनुभूयमानं न चाप्रमथ्येह तथा प्रदर्श्यते ।
तथैव दुग्धे स्थितमेव यद्घृतं न चैव दृश्येत विना प्रयत्नतः ॥
न चैव काष्ठे विहितोऽपि वह्निः प्रदर्श्यते घर्षणमन्तरेण ।
तथैव सद्वर्तनमन्तरा स्थितः गुहेश्वरो नैव विभाति मानसे ॥
तस्मात्क्रियेताचरणं सदेव तदेव सद्दर्शनसाधनं भवेत् ॥

Can you know the sweetness of sugarcane without actually crushing it? Can you get the

ghee out of milk without actively churning it. Can you get the fire in the fuel without actively developing it. Therefore, the realisation of Guheswara (Lord residing in the cave-like heart) in oneself can only be attained by actively striving for it.

काय सोनेयनरितल्लदे हण्ण सोनेरस चिह्नदोरदु. कायद कर्मव माडि, जीवज्ञानवनरिदु, त्रिविधभावशुद्धियादल्लदे मेले काणलिल्ल कपिलसिद्धमल्लिकार्जुनलिंगव ॥ १४ ॥

आदावनास्वाद्य रसालमामं फक्काम्रवैचित्र्यमिह ग्रहीतुम् ।
नालं यथा तद्वदिहापि कायकर्म ह्यकृत्वा न विशुद्धबोधः ॥
न तं विनात्मप्रवणात्मता स्यात् इत्येष सिद्धो ननु मल्लिकार्जुन ।

You may guess the taste of the ripe fruit by knowing its crispness in the raw state. Practising bodily devotion and possessing in internal realisation and with the three kinds of purity of soul, mind and body, you will realise Sri Channa Mallikarjuna Linga.

बीजदोळगिह वृक्षफलव सवियबहुदे ? मळेवनियोळिप्प हुरिमञ्जिमुत्तुगळं सरगोळिसि कोरळोळु धरिसबहुदे ? हालोळगिप्प तुप्पवु अरसिदरे सिक्कुवुदे ? कब्बिनोळगिप्प बेल्लवु कण्णिगे काणिसुवुदे ? तन्नोळगिप्प शिवतत्त्ववु नेनेदाक्षणवे अनुभवक्के

बरवुदे? भाविसि तिळिदु मथिसि प्रयोगान्तरदिं. प्रसन्नत्ववं माडिकोण्डु तदनुभवसुखदोळोलाडुवुदु अतिचतुरनाद शिव-शरणङ्गल्लदे उळिदर्गुण्टे गुहेश्वर? ॥ १५ ॥

बीजे स्थितं वृक्षफलं हि सूक्ष्मं किं भोक्तुमर्हं परिदृश्यतेऽत्र ।
स्वात्यंम्बुनिष्ठाः किमु सूक्ष्ममुक्ताः हारात्मतां प्राप्य गळे नियोज्याः ॥
पयस्स्थितं किं घृतमिच्छयाप्यते इक्षुस्थितं किं गुडमीक्ष्यतेऽक्ष्णा ।
स्वस्मिंस्थितं यच्छिवतत्त्वमेतत् स्मृतिक्षणेनैव मतौ स्फुरेत्किम् ॥
संभाव्य विज्ञाय विमथ्य भूयः प्रयोगतश्चैव प्रसाद्य नित्यम् ।
अन्यैश्च किं साधयितुं हि शक्यं गुहेश्वराश्रावय भृत्यवार्ताम् ॥

You cannot taste the fruit of the tree lying hidden in its seed. You cannot have the pearl necklace out of raindrops. You cannot taste ghee by tasting milk. You cannot get jaggery by looking at the sugarcane stalk. So the Impersonal Light existing in your heart is not visible from outside. Identification, knowledge, meditation and practical applieation enable the pursuant to realise Its presence.

एवं च देहेऽव्यक्ततया विराजमानं महाप्रकाशरूपं परमात्मानं अनुभवितुं मानवः न केवलं ज्ञानं, न केवलां क्रियां वा समाश्रयेत्; किन्तु ज्ञानक्रियासमन्वयमार्गमेवावलम्बेतेति शरणा

अभिप्रयन्ति । केवलज्ञानमार्गेण स्वं शिवं मन्वानोऽपि जीवः स्वीयमानन्दमनुभवितुं न प्रभवति । प्रकृतिवशङ्गतः सः प्राकृतिकैः सत्त्वरजस्तमोगुणैर्बद्धः स्वीयां सच्चिदानन्दप्रकृतिं विस्मृत्य स्वं सत्त्वरजस्तमोमयमेव मनुते । देहप्रकृतिः त्रिगुणात्मिका, आत्मप्रकृतिस्तु सच्चिदानन्दमयी । देहप्रकृत्या आत्मप्रकृतिस्तिरोहिता वर्तते । अत एव आत्मप्रकृतिज्ञानमवलंब्यैव यत्र क्रिया भगवदुपासनादि प्रवर्तते तत्रैव देहप्रकृतिरात्मप्रकृतिकतया परिणमितुं शक्नोति । एतदर्थमेव ज्ञानावलंबिनी क्रिया वर्धिष्णुभिराचरणीयेति शरणा उपदिशंति । शिवोऽहंभावनया प्रवर्तमानो जीवः बालायां सौहार्दमिव स्वस्मिन्नव्यक्ततया विलसन्तं शिवं ज्ञात्वा अनन्तरं स्वस्मिन् शिवभावविलासाय शिवध्यानोपासनरूपं मंथनं श्रद्धया कुर्यात् । अत एव "संभाव्य विज्ञाय विमथ्य" इत्युक्त्वा शरणाः साधकेषु भावनाज्ञान-क्रियाणां यौगपद्यानुष्ठानमुपदिशन्ति । एतादृशेन व्यवसायेन मायाया वक्रगतिः क्षीयते; इन्द्रियाणां दुष्प्रेरणा च स्वयमेव विनश्यति; अहङ्काराभिमानयोर्दुष्प्रवृत्तिरपि अवकाशाभावात् स्वतः परिहीयते । एवं दुःखनिवृत्त्या जीवस्य ज्ञानशक्तिः क्रमेण विकसति । अनयैव दिशा मानवः शिवो भवितुमर्हति । अयं च शिवभावानुभवः प्रकृतिपरिणामं विना दुश्शक एव । अत एव ज्ञाने सिद्धेऽपि विदुषा लोककल्याणदृष्ट्या शिवार्चनादिका नित्यक्रिया अवश्यमाचरणीयेति निर्बन्धः परिकल्पितः । "ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः" इति श्रीरेणुकाचार्याः अगस्त्यमहर्षये शिवतत्त्वोपदेश-

समये ज्ञानक्रिययोरुभयोरपि एककालसमाश्रयणीयत्वं प्रतिपादयन्ति । किं मोक्षतरोर्बीजमिति प्रश्नस्य सत्क्रियायुक्तं सम्यग्ज्ञानमेव उत्तर-रूपेण विधीयते शङ्कराचार्यैरपि । 'क्रियावानेव ब्रह्मविदां वरिष्ठः' इति श्रुतिरपि सत्क्रियाचारसंपन्नमेव ब्रह्मज्ञानिनं श्रेष्ठमिति मनुते । तामेव परंपरामनुसृत्य शरणाः ज्ञानक्रियासमप्राधान्यमवलंब्यैव स्वीयां अर्चनामारभन्ते ॥

स्वरूपज्ञानादनन्तरमपि साधकः स्वज्ञानानुभवस्थिरीकरणार्थं शिवोपासनादिसत्क्रियामाचरेदेव । तेन क्रियमाणं सर्वमपि कर्म शिवाराधनमित्येव सः भावयेदित्याह—

अरिवनरिदेनेंदु क्रियेय बिडवारदु । मधुरक्के मधुर ओदग-लागि सविगे कोरतेयुंटे ? द्रव्यक्के द्रव्य कूडलागि बडतनवुण्टे ? नी माडुव माटदल्लि शिवपूजेय नोटभावविरबेकु. अदु कलिदेवर देवन कूट चन्दय्य ॥ १६ ॥

प्राप्तोऽस्मि चिद्ज्ञानमितीह न क्रियां परित्यजेत्साधकवर्ग एषः ।
माधुर्यधर्मस्य पुनस्तदीययोगान्न माधुर्यमपैति लोके ॥
वित्तेन वित्तस्य च योग आगते किमस्ति दारिद्र्यनिपातशङ्का ।
कर्म त्वया यत्क्रियते तदेव देवोपचारेक्षणतश्च योज्यम् ॥

Thinking that you have attained knowledge you must not give up practice. If sweet is added to sweet, it adds to sweetness. If wealth is added to wealth, how can poverty

exist in an individual? Whatever you achieve should reflect the glory of God. Hence your duty should be discharged as Divine worship,

अन्तःशुद्धिं विहाय बहिःशुद्धिविधानेनैव न कोऽपि विकासः संभवेत् । जगति अनुभवितव्यं सर्वमपि सुखदुःखजातं शिवप्रसाद-भावनया स्वीकर्तुं न पारयेयुस्तादृशो जना इत्याह—

ओळगे तोळेयलरियदे होरगे तोळेदु कुडिवुत्तिद्दरय्य.
पादोदकप्रसादवनरियदे बन्द बट्टेयल्लि मुळुगुत्तिद्दारे गुहेश्वर ॥१७॥

अन्तः शुचीकर्तुमपारयन्तः बाह्ये शुचीकृत्य पिबन्ति लोके ।
प्रसादपादोदकयोर्महत्त्वं वेत्तुं न जानन्ति भवाब्धिमग्नाः ॥

Without knowing how to cleanse inside, people cleanse the vessel outside and make use of it for their requirements. So are the people immersed in their wordly life without realising the sacredness of Padodaka (holy water obtained by worshipping the worthy feet of Gurus and Jangamas) and Prasada (Go'ds favour).

तनु बत्तले इद्दरेनय्य ? मन शुचियागदन्नक्र ? भस्मव हूसिदोडेनु करणादिगुणङ्गळन्नेत्ति मेट्टि सुडदन्नक्र ? इन्तु आशेय वेषद भाषेगे गुहेश्वर साक्षियागि छी एंबेनय्य ॥१८॥

स्वान्तेऽशुद्धे कायशुद्ध्या किमु स्याद्भावेऽशुद्धे मुण्डनात्कस्य किं स्यात् ।
लोभादीनामिन्द्रियद्वारकाणामुद्धतानां सन्निपातेन सार्धम् ॥

भूयो दाहं चान्तरा भस्मधृत्या किं वा लब्धुं शक्यमेतद्ब्रुवन्तु ।
संप्रत्याशावेषभाषानुबद्धान् धिग्धिक्कारैर्गर्हयन्नस्मि देव ॥

What good if the body becomes pure by penance while the mind remains impure? What is the good of shaving the head unless the heart is shaved of all impurities? What is the good of smearing the body with ashes if the sensual pleasures are not burnt into ashes. Such hypocrites are to be reproached severely in the presence of Guheswara (God residing in one's own heart).

एवं बाह्यक्रियाचरणतः बाह्यशुद्धिं संपाद्यापि सुज्ञानविचारेण अन्तःशुचिर्यदि न साध्येन तदा च साधकाः स्वांतरंगेऽलिप्ततया विराजमानं महाप्रकाशमनुभवितुं न पारयति । भावे हृदये अशुद्धे सति कस्य शिरसो मुण्डनाद्वपनात् किं वा फलं मानवो लभेत ? न किमपि फलं साधयेदित्यर्थः । तथैवेन्द्रियणां दुष्प्रवृत्तिं यदि निरोध्दुं साधको न शक्नोति तदा भस्मधारणमपि व्यर्थमेव भवेत् ? अहङ्कारममकारयोः रागद्वेषयोः कामक्रोधादीनां च भस्मीकरणमेव भस्मधारणं ज्ञापयेत् । भस्मधारणेनापि यदि मानवः रागद्वेषादि-युक्तो वर्तेत तदा भस्मधारणमपि निरर्थकमेव संपद्येत. एवमन्तर्वि-चारशून्याः बाह्यक्रियामग्नाः पुरुषाः स्त्रियश्च सर्वथा निन्द्या एव भवेयुः । अत एव ज्ञानक्रिये उभे अप्यवलंब्य मानवः स्वीयश्रेयोऽ

भ्युदयौ साधयेदिति शरणा अभिलपन्ति । एतादृशी तेषां प्रार्थना तावत् मानवसमाजस्य सर्वतोमुखाय कल्याणाय भवेदित्यत्र न कोऽपि संशयोऽस्ति । सर्वजीविनां कल्याणसाधनायैव कैलासात् भुवमागताश्शरणास्तत्कार्यं वीर्यवत्तरया वाण्या कृत्या च साधितवन्तः । अत एव ते अद्यापि स्मरणीयाः संवृत्ताः ॥

अन्तरङ्ग शुद्धविल्लदवरोळगु अत्तिय हण्णिनंते क्षुद्र विडदु नोडय्य ? अन्तरंग शुद्धवुळ्ळवरोळगे बाळेय हण्णिनंते सुगुण तोरदु नोडय्य ? इदु कारण अन्तरंग शुद्धविल्लदवर सङ्गदल्लि इरबारदु शरणरु ॥१९॥

हृदयं परिशुद्धिमेति चेत् कदळीव प्रतिभाति सद्गुणम् ।
तदिदं विपरीततामितं चेत् विगुणं जन्तुफलोपमं भवेत् ॥
अत एव मनःकषायितैः सहवासं विदधीत नो गुणी ।

Men of impure mind are like the fruit of the country fig tree. Pure minds are like the plantain fruits full of sweetness. Therefore one should not consort with men whose mind and heart are not cleansed.

क्रिये मरेदल्लि अरिवु हीनवागिप्पुदु । अरिवु मरेदल्लिल क्रिये हीनवागिप्पुदु । ज्ञान मरेदल्लिल बेळगिन कळे होयित्तु । मल्लिकार्जुनसिङ्गवु अवरिगे मरेयागि तोलगित्तु ॥२०॥

अंतर्हिते कर्मणि धीविकासो न्यूनत्वमेतीति विदन्तु लोकाः ।
तथैव चान्तर्धिमुपागतायां धियीतरत्कर्म भवेत्प्रहीणम् ॥
ज्ञानेऽस्मृते ज्योतिष आन्तरस्य कला प्रहीयेत यथाऽसितेन्दोः ॥

If practice if forgotten, knowledge becoms dim. If knowledge dims, practice becoms ineffective. The internal light will have disappeared. Such people as have not acquired spiritual knowledge and are not pursuing the usual practice wlll lose vision of divine Mallikarjuna.

एवं ज्ञानक्रियासमन्वयेनैव मार्गेण साधकः सर्वदा स्वं शिवांशं ज्ञात्वा, स्वस्मिन्नेव स्वश्रेयसेऽव्यक्ततया शिवो विराजत इति च ज्ञात्वा सर्वमपि व्यवहारं शिवप्रीत्यर्थमेव कुर्वन् एककाल एव ज्ञानक्रिये उभे अपि समाश्रित्य वर्तेतेति शरणा निरीक्षन्ते । य एवं न जानाति सः उपासनादिकं कर्म कुर्वन्नपि निरतिशयं ज्ञानानन्दं न विन्दते । लौकिकफलप्राप्त्यापि तस्य तृप्तिर्न विद्येत । शिवानन्दानुभवादधिकं फलमेव न विद्यते । अनुभवामृतं तु ज्ञानक्रिययोः समाश्रयणं विना न लभ्यते । स्वस्य स्वान्तस्थस्य शिवस्य च अपरिज्ञानेन कृतं सर्वमपि कर्म व्यर्थमेव भवेत् । कर्माचरणं यद्यपि उद्दिष्टं फलं साधयति । तथापि तेन जन्मसार्थक्यं न संपाद्यते । जीवने समाधानमपि साधको नानुभवति । शान्तिसमाधाने विहाय संपादितं सर्वमपि फलं जन्मान्तरसाधनायैव भवेत् । मृतप्रायः

पुरुषः निधिसङ्ग्रहेणापि कीदृशं सुखं विन्देत ? अल्पप्रमाणं सुखं साधयितुं सागरसदृशं दुःखं यदि मानवोऽनुभवेत् तदा सः कथं वा कृतकृत्यो भवेत् ? एतदर्थमेव ज्ञानमार्गमवलंब्यैव कर्मयोग आचरणीय इति निर्बन्धः कृतः शरणैः। प्रतिदिवसं निर्दिष्टे समये यथा अर्चनं क्रियते तथा कायकाचरणमप्यावश्यकमिति कायकस्यपि महत्त्वं परिकल्पितं तैः ॥

शरीरे विद्यमानं रोगं परिहर्तुं चिकित्सादिकं कर्तव्यमिति लोके सर्वे जना जानन्ति। तथापि चिकित्साप्रयोगात्पूर्वं रोगनिदानं ज्ञेयं विवेकिभिः। रोगकारणं तत्स्वरूपं च अविज्ञाय न कोऽपि विवेकी चिकित्सदिकं प्रयुङ्क्ते। कस्य रोगस्य कीदृशं भैषज्यं प्रयोक्तव्यमित्याकारकं ज्ञानं प्रथमं प्रवर्तते। तदनुसारिणी या क्रिया समनन्तरमेव प्रयुज्यते सैव रोगनिवारिका भवेत्। एवमेव मानवास्सर्वेऽपि न केवलं शरीरे परन्तु हृदये मनसि च रोगवन्त एव। अयं च रोगो भवबीजमित्यनुभविभिर्भाव्यते। एवं भवरोगो मल इति कथ्यते। अयं च मलरोगः सनातनः। अयमेव पाशहेतुरिति कथ्यते शरणैः। अयं च मलः आणवमायेयकार्मिकभेदेन त्रिधा वर्तते। आणवमलः जीवे अणुत्वबुद्धिमुत्पाद्य तस्य शिवात् भेदं कल्पयति। मायेयमलः जीवस्य शिवसंबन्धं विनाश्य देहसंबन्धिभिर्व्यामोहं कल्पयति। तथैव कार्मिकमलः सर्वव्यवहारस्य परमात्मकर्तृत्वबुद्धिं नाशयित्वा जीवस्यैव कर्तृत्वबुद्धिं उत्पादयति। एवं च जीवः स्वार्थताव्यामोहाहङ्काराख्यैस्त्रिमलैरावृतः रोगग्रस्तो वर्तते। आरोग्यवानेव

सुखं विन्दते । अरोगतास्थितौ यो वर्तते स एव स्वस्य लोकस्य च कल्याणं साधयितुं प्रभवेत् । अनारोग्यस्थितौ वर्तमानः पुरुषो विषयलम्पटः जिह्वाचापल्येन दृष्टिचापल्येन च नित्यदुःखी संपद्यते । अत एव शरणाः मानवस्यान्तस्स्थं चित्प्रकाशमुद्बोधयितुं कश्चन गुरुरावश्यक इति निर्दिशन्ति । स्वस्यैव देहे विद्यमानं शिरः स्वयमेव द्रष्टुं न पारयति मानवः । एवं सति तस्मिन् शिरसि विराजमानं चित्प्रकाशं ज्ञातुमनुभवितुं च कथं पारयेन्मानवः ? स्वान्तस्स्थं हृद्रयमपि द्रष्टुं न शक्नोति पुरुषः । तथैव तत्रस्थं प्रकाश-मप्यनुभवितुं सः न शक्नोत्येव । एवं साधकस्य हृदयशिरस्यो-र्विराजमानं प्रकाशं बोधयितुं कश्चन गुरुः समाश्रयणीयः । सोऽपि तदन्तस्स्थस्य प्रकाशस्य साक्षात्कारी यदि स्यात् तदैव अन्यस्मै तत्रस्थं प्रकाशं ज्ञापयितुं हि प्रभवेत् । नो चेदन्धेनैव नीयमाना यथान्धास्तथा स्वयं भ्रान्ता अन्यानपि भ्रामयेयुर्जनाः । एवं साधके अनुभवसिद्धस्य गुरोरनिवार्यतां स्पष्टयन्तः शरणाः यं ज्ञानक्रिया-समन्वयमार्गमन्वतिष्ठन् सः सर्वेषामप्यस्माकं हृदयनैर्मल्याय प्रभवेत् । यः स्वं देहस्थमपि देहाद्भिन्नं दिव्यज्योतिस्स्वरूपमिति जानाति सः यदि क्रियावान् भवेत् स एव बुद्धिमान्, योगी इति च भाव्येत । मानवैस्सर्वैरपि एतादृशैर्योगिभिर्भाव्यमिति शरणाना-माशयोऽत्र सम्यगुपवर्णितः ॥

एवं साधकः विदितात्मतत्त्वोऽपि स्वज्ञानस्थिरीकरणार्थं स्वक्रियानुष्ठानं सुगमयितुं च अन्तर्बाह्ये च गुरुमाश्रयेदिति शरणा

उपदिशन्ति । दिव्यज्ञानिनः स्वीयं ज्ञानमेव यद्यपि गुरुः स्यात् । तथापि तस्य बहिरपि कश्चन गुरुरपेक्षणीय एव । यः स्वयमेव स्वस्य गुरुरिति जानाति सः क्रियावान् भवितुं नार्हति । क्रियानुष्ठानेनैवं सर्वस्यापि अहंङ्कारममकारभ्रान्तिर्निवर्तेत । दुर्बुद्धिरपि नोत्पद्येत ; सद्बुद्धिस्सद्भावना चोत्पद्येत ; उत्पन्ना च सा स्थिरीक्रियेत । अतः सर्वस्यापि कश्चन गुरुरपेक्ष्यत एव । अयमाशय एवमुपवर्ण्यते शरण्या मुक्तायक्कनाम्न्या--

तन्न तानरिदवङ्गे अरिवे गुरु। अरिवरितु मरहु नष्टवागिद्द्लि द्दष्टनष्टवे गुरु। तानादल्लि मुट्टि तोरिदवरिल्लदडेनु ? सहजव नेलेगोळिसिदवगे निर्णयनिष्पत्तिये गुरु नोडा । ई परि गुरु तानादरू गुरुविडिदिरवेकु ॥ २१ ॥

स्वस्वरूपविदुषो मतिरेव स्याद्गुरुर्मतिविदः स्मृतिनाशे ।
द्दष्टनष्टमपि सद्गुरुरेव स्यात्स्वयं भवति चेत्पररूपी ॥
देशनार्थमपरस्य न चेक्षा तद्वदेव सहजस्थितिवेत्तुः ।
निर्णयस्य जनिरेव गुरुः स्यादेवमप्यभिमतो गुरुलाभः ॥

To one who knows oneself, his knowledge itself is his Guru. If he has known and forgotten his knowing and forgetting, that itself is his Guru. To such a one no other person is needed to touch and point out. To one who attains to his natural state, the realisation of

that state is itself Guru. Yet even such a one should in modesty attach himself to a Guru.

एवं च शरणगीता सर्वेष्वपि साधकेषु अन्तः स्वरूपज्ञानस्य बहिस्तद्गुणायाः क्रियायाः अनिवार्यतां प्रतिपादयति। कश्चन जीवः स्वरूपज्ञानी सन्नपि, तस्य ज्ञानमेव गुरुस्थाने वर्तमानमपि, तस्य बहिः क्रियाचरणमप्यावश्यकमेव। स्वयं ज्ञानी सन्नपि कश्चन तस्य बहिर्गुरुरप्यावश्यकः। स्वरूपज्ञानिनः स्वीयं ज्ञानमेव गुरुर्भवति। तथैव दृष्टनष्टमपि गुरुर्भवितुमर्हति। दृष्टस्य देहात्मभावस्य नाशः स्वरूपज्ञानात्संभवति। अतस्तादृशो भावस्यापि गौरवं दत्तं शरणैः। तथैव सहजस्थितौ शिवभावे तिष्ठतो मुक्तजीवस्य तादृशी स्थितिरपि गुरुभाव एवेति शरणैः परिगण्यते। एवं त्रिविधमान्तरङ्गिकं गुरुत्वं संपादयितुं मानवाः सर्वेऽपि प्रभवन्ति शरणगीतानुसारेण। तथापि तैः सर्वैरपि बाह्ये लब्धतादृक्त्रिविधगुरुत्ववानपि कश्चन जीवोऽन्वेषणीय एवेति शरणगीता आशास्ते। स्वयं गुरुरपि जीवः पुरःस्थिते जीवे गुरुत्वं पश्येत्। तदानीमेव तस्मिन् अहङ्कारममकारादीनां रागद्वेषादीनां प्रवृत्तेरवकाशो न स्फुरेत्; करणत्रयसारूप्यं च सम्यग्विलसेत्। अनेनैव मार्गेण साधकः विनीतो निर्ममो निरहङ्कारश्च सन् लोकमध्यात्मभावनया प्रीणयितुं शक्नुयात्। मानवः स्वयं रोदितुं अन्यांश्च रोदयितुं वा नागतोऽस्मिन्देहे; परन्तु स्वस्वरूपात्मकं सन्तोषं स्वयमनुभवन् अन्येषु च सन्तोषविकासनार्थमेव सोऽत्रागतः।

अत एव साधकः स्वयं गुरुशक्तिसंपन्नो भूत्वा अन्येष्वपि तादृशं गुरुभावमेवावलोकयन् स्वस्मिन्नन्येषु वा दारिद्र्यदौर्बल्ययोरवकाशं न दद्यादिति शरणा अपेक्षन्ते ॥

यः जीवति सः धीरो वीरो निर्भयो नित्यसुन्दरश्च भवेदिति शरणगीतायाः आशयः । "साधुस्वभावः पुरुषस्तु लोके शिवप्रियो ह्येकदिनं वसेत्तु" इति शरणाः वदन्ति । "सन्नित्यभिख्यां प्रतिपद्य जीवेत् स एव धन्यो भुवि मान्य एव" इत्येषा शरणानां स्थितिर्यदि सर्वैर्विज्ञायते आचर्यते च तदा भूरेव स्वर्गायेत ; द्वेषमात्सर्यादीनामत्र प्रवृत्तिरेव न स्यात् । इदमेव समदर्शनमिति भगवद्गीतायामुपदिश्यते । "अध्यात्मभावनाजातं क्षणमात्रेऽपि यत्सुखम् । तत्सुखं कोटिवर्षैस्तु लभ्यते नैव भोगिभिः ॥" इत्येतत्साधुजीवनमेव श्रीरेणुकाचार्याः हृत्पूर्वकं प्रशंसन्ते । सर्वात्मतारूपं समदर्शनं यस्मिन्समाजे राष्ट्रे वा विलसति तत्रैव भाग्यलक्ष्मीरुल्लसति । तादृगेव जीवः जीवने मधु विन्दते । एवं सर्वेषां मानवानां जीवनं यथा आरोग्यभाग्येन नित्यसौन्दर्येण च विराजेत तथा ते ह्यात्मानमितरांश्च परस्परं ज्ञात्वा भावयन्तश्च श्रेयोऽभ्युदयौ प्राप्नुयुरिति शरणगीता निरीक्षत इति सर्वमवदातम् ॥

## अर्चनपद्धतिः

लोके वसन्तः सर्वेऽपि मानवाः परस्परमवलंबमाना एव व्यवहरन्ति । ये तु सुकृतशालिनस्ते सुखिनो वसन्ति । ते तु

अविज्ञातशिवतत्त्वाः अलब्धसमदृष्टयः जीववैविध्ये आत्मौपम्यदृष्टि-माचरितुमशक्नुवन्तः स्वीयं सौभाग्यमेवाधिकतया भावयन्ति। आत्मज्ञानविमुखाः परदुःखं स्वीयमिति भावयितुं न पारयन्ति। सर्वेषां सर्वास्वप्यवस्थासु तदन्तर्बहिरपि साक्षितया विराजमानः सर्वमङ्गळकरः शिव एव लोकनियामकः प्रभुस्सर्वदा सर्वत्र जागर्ति। स एव सर्वैरपि रक्षकबुद्ध्या आश्रयणीय इत्याशयं शरणाः प्रतिवचनं विशेषतोऽत्र उपपादयन्ति—

चन्द्रोदयक्के अंबुधि हेच्चुवुदय्य ; चन्द्र कुन्दे कुन्दुवुदय्य। चन्द्रङ्गे राहु अड्डबन्दल्लि अंबुधि बोब्बिट्टित्ते? अंबुधिय मुनि आपोषणव कोंबल्लि चन्द्रमनड्डबन्दने? आरिगारू इल्ल! केट्टवङ्गे केळेयिल्ल! जगद नण्ट नीने अय्य, कूडलसङ्गमदेव ॥ १ ॥

चन्द्रोदयादुच्चयमेति वार्धिस्तस्यास्तकाले परिहीयते सः।<br>
मुनिर्यदापः पिबति स्म वार्धेः किमागतोऽब्धेस्सह कर्तुमिन्दुः॥<br>
यदा तु राहुर्ग्रसते हि चन्द्रं तदा समुद्रः किमु याति मध्ये।<br>
न कोऽपि देव! प्रददाति रक्षां त्वमेव दाता जगदेकबन्धुः॥

True, the ocean swells at the sight of the friendly moon and subsides when the moon passes out. But when the sage Agastya drank the ocean, did the moon go to its aid? Similarly when the moon was being swallowed by Rahu, the ocean did not give it succour. Hence, none is prepared to offer protection to

the distressed. O Lord Sangama Deva! Yon alone, a single friend of the universe can protect a person from distress.

जगद्रक्षकोऽपि प्रभुस्तथा न सर्वैरपि सुग्राह्यः; परन्तु सद्भक्तैरेव प्रभोः प्रभावो विज्ञायते। तादृशो भक्ता एव विरळाः। मानवानां सहस्रेषु कतिपय एव परमात्मज्ञानाय प्रवर्तन्ते। लक्षेष्वेक एव भक्तो भवितुमर्हति। तादृशेषु भक्तेष्वेक एव शरणो भवेत्। अयमाशय एवमुपवर्ण्यते शरणाग्रगण्येन चन्नबसवार्येण—

वट्टबयलेल्ल गट्टिगोण्डोडे स्वर्गमर्त्यपाताळङ्गळिगे ठाविन्नेल्लियदो. मेघद जलवेल्ल मुत्तादोडे सागरङ्गळिगे उदकविन्नेल्लियदो. भ्रष्टजीविमानवरेल्ल शिवज्ञानिगळादोडे भवद वेळे इन्नेल्लियदो. इदु कारण कूडलचन्नसङ्गय्यनल्लि लक्षकोब्ब भक्त; कोटिगोब्ब शरण काणिरो ॥ २ ॥

खमेव सर्वं घनतामियाद्यदि स्वर्गादिलोकाः कथमाप्नुयुः स्थळम्?।
मेघोदकं सर्वमपीह मौक्तिकं स्याच्चेत्समुद्रः कथमावहेज्जलम्?॥
भ्रष्टैर्जनैर्ज्ञानमवाप्यते चेत् तदा कथं स्याद्भववर्धनं हि?।
अतोऽत्र भक्तो विरळो हि जातः लक्षेषु चैकः शरणस्तु कोटौ ॥

If the blank sky became a solid mass, there would be no place for the seven lokas. If all rain drops become pearls, there would be no water in the sea. So if every erring and sinning mortal would attain divine knowledge,

there would be no more bondage on earth. Therefore are devotees and saints far and few.

मानवानां कोटौ एक एव शरणो भवेदित्युक्तिरपि समीचीनैव । विरळा अपि तादृशः शरणा लोके गोप्यतया निवसन्ति । ते कथं वर्तन्ते ? कुत्र निवसन्ति ? किं ते आढ्या दरिद्रा वा ? किं तेषां स्थानमानादिकम् ? इत्यंशाः नास्माभिः परिशीलनार्हाः । अयमाशय एवमुपवर्ण्यते—

आवाव भावदल्लि शिवन नंबिद शरणरु एन्तिद्दरेनय्य ? आवाव भावदल्ल शिवन नंबिद महिमरु एन्तिद्दरेनय्य ? सुचरित्ररेन्तिद्दरेनय्य ? अवलोहव कळेव परुषवेन्तिद्दरेनय्य ? कूडलसङ्गन शरणरु रसद वारिधिगळु एन्तिद्दरेनय्य ॥ ३ ॥

शिवैकनिष्ठाः शरणास्तु लोके केनापि रूपेण वसन्तु नित्यम् ।
महानुभावाश्च शिवैकचित्ता यथाकथं वापि वसन्तु भूमौ ॥
साधुस्वभावा विनिवृत्तकामाः कयापि वृत्त्या निवसन्तु लोके ।
संशोधकोऽयंमणिरस्तु रूक्षस्तथापि संशोधयतीह लोहम् ॥
संगार्यभक्ता हि यथाभिलाषं वसन्तु लोके रसवार्धयस्ते ।

Sharanas whose mind and spirit are dedicated to Siva may continue on earth in whatever form or manner. They may pursue any profession and dwell in the world as they like. Stone named parusha which can convert a metal into gold will however be rude in

appearance. Similarly, thc devotees of Kudala Sangama Deva are the store of bliss, whatever may be their appearance.

शरणास्तु शिवस्य अतीव प्रियास्तदन्तरङ्गभूताः लोककल्याणार्थं तेनैव प्रेपितास्सन्तः भुवि सामान्यजना इव यत्किञ्चित्कर्म अवलम्बमाना वसंति। तथाप्यद्याप्यत्रापि ते शिवैकनिष्ठास्तच्चित्तास्तद्गतप्राणा एव वर्तन्ते। अयमाशयोऽत्रोपवर्ण्यते—

वनद कोगिले मनेगे बन्दरे तन्न वनव नेनेवुद माण्बुदे ? मलेयगजवु मनेगे बन्दरे तन्न मलेय नेनेवुद माण्बुदे ? कूडलसङ्गन शरणरु मरेदु मर्त्यक्के बन्दरे तम्म आदिमध्यान्तव नेनेवुद माण्बरे ? ॥ ४ ॥

वन्यः पिको मन्दिरमागतश्चेद्वनस्य चिन्तां विजहाति किन्तु ? ।
गिरेर्गजः किं पुरमागतश्चेत् गिरेस्तु चिन्तां विजहाति नित्यम् ? ॥
भुवङ्गताः स्युः शरणाः कदाचित् शिवात्मचिन्तां न च कुर्वते किम् ? ।

If the cuckoo of rhe forest comes to the house does it forget the forest? If the elephant residing in the mountain comes to the city, does it forget its mountain-home ? Do the Sharanas, though born on earth, ever forget their divine meditation and their mission in life?

लोककल्याणायैव समागतानामेतेषां शरणानां सङ्गो मानवानां श्रेयसे अभ्युदयाय च भवेदिति कथ्यतेऽत्र—

ज्ञानद बलदिन्द अज्ञानद केड नोडय्य. ज्योतिय बलदिन्द तमन्धद केड नोडय्य. सत्यद बलदिन्द असत्यद केड नोडय्य. परुषद बलदिन्द अवलोहद केड नोडय्य. कूडलसङ्गन शरणर अनुभावदिन्द एन्न मनद केड नोडय्य ॥ ५ ॥

ज्ञानप्रभावाद्धिनिहन्यतेऽज्ञता ज्योतिर्बलादेव तमो विहन्यते ।
ऋतप्रभावादनृतं विहन्यते तथैव लोहः परुषप्रभावात् ॥
भवो मदीयो हत एव देव महानुभावैः शरणैश्च सङ्गात् ।

Ignorance is destroyed by knowledge. Darkness is destroyed by light. Truth destroys untruth, Impurities in metals are destroyed by the contact of Parushamani. It is a convention that a metal gets transformed as gold owing to its contact with Parusha stone. Lord ! May my worldly bondages be destroyed by contact with the holy Sharanas!

मानवाः स्वेषु विद्यमानं परमात्मानं ज्ञातुं शरणानां सङ्गमेव आश्रयेयुरिति शरणा अक्कमहादेवी कथयति—

सङ्गदिन्दल्लदे अग्नि हुट्टदु. सङ्गदिन्लदे बीजमोळेदोरदु. सङ्ग दिन्दल्लदे देहवागदु. सङ्गदिन्दल्लदे सुख तोरेदु. निम्म शरणर अनुभावद सङ्गदिंद चन्नमल्लिकार्जुनय्य, परमसुखियागि बदुकिदेनय्य॥६॥

सङ्गं विना नोद्भवतीह वह्निस्संगं विना नांकुरयेच्च बीजम् ।
संगं विना नास्ति शरीरभावः संगं विना सर्वसुखस्य नाप्तिः ॥

देव त्वदीयैः शरणैश्च नित्यं संयुक्त एवानुभवं तदीयम् ।
ततश्च सौख्यं परमं लभेय सर्वोऽप्ययं मे भवतः प्रसादः ॥

It is by contact that fire bursts into flame. It is by contact that the seed sprouts as plant. Hence, It is by contact with the Saintly personalities that the body comes into being. It is by contact that man attains ease and happiness. O Lord Mallikarjuna, I have survived to enjoy bliss on earth owing to my genuine contact with the Enlightened.

शरणसंगादेवाधिगतां सद्भावनामभिव्यनक्ति सात्र--

गंगेयोडनाडिद गट्टवेट्टंगळु केट्ट केड नोडय्य: अग्नियोड-नाडिद काष्ठंगळु केट्ट केड नोडय्य ! ज्ञानियोडनाडिद अज्ञानि केट्ट केड नोडय्य ! इन्ती परशिवमूर्ति हरने ! निम्म जंगमलिंग-दोडनाडि एन्न भवादिभवंगळु केट्ट केड नोड चेन्नमल्लिकार्जुन॥७॥

गंगादिसंघट्टितपर्वतास्तु सर्वे च निर्मूलतया विनष्टाः ।
अग्नेश्च संसर्गवशाद्धि काष्ठं समूलतो नश्यति पश्य जीव ॥
सुज्ञानिनस्संगवशाद्धि जंतुस्त्वज्ञाननाशेन शिवे प्रलीयते ।
तथैव शंभो गुरुमल्लिकार्जुन तवैव योगात्सुखमेति लोकः ॥

When the rivers like Ganges flow into the ocean, they lose their individuality and get merged in it. When fuel is thrust into the fire,

it becomes one with fire. So when a man seeks refuge in a holy saint, he becomes pure and enlightened and hence enjoys bliss. O Lord Mallikarjuna, I surrender myself to You and seek to be conferred eternal happiness.

अव्यक्ततया देहे निवसति परमात्मनि विश्वास एव जनेषु नोदेति। तमसाऽवृतास्तु मानवाः परमात्मनि विश्वासं प्रवर्धयितुं आचरितुमपि न जानंति; परंतु स देवः भक्तान् अनेकविधैः प्रलोभनैः परीक्षां च कुरुते। एतेषु संदर्भेषु मानवे परमात्मविश्वासः सहजतया शिथिलो भवति। एकदा विश्वस्य पुनर्यः संशयमाप्नोति स तु सर्वदा सूतकी भूत्वा अभ्युदयं न विंदत एव; श्रेयोलाभस्तु तस्य दूरत एव विद्येत। अयमाशयः शरणैर्लोककल्याणाय कथं निरूप्यत इत्येतदाकर्ण्यतामधुना॥

बसवार्य इममाशयमेवं निरूपयति--

नंबरु नेच्चरु बरिदे करेवरु. नंबलरियरु लोकद मनुजरु; नंबि करेदोडे ओ एन्नने शिवनु; नंबदे नेच्चदे बरिदे करेवन कोंब मेट्टि कूगेंद नम्म कूडलसंगमदेव॥ ८॥

न विश्वसंत्येव जनास्तु देवं तथापि तं नित्यमुपाह्वयंति।
कर्तुं च विश्वासमपारयंतस्तथापि मोहाद्विचरंति मंदाः॥

विश्वासपूर्वं यदि वाह्वयेत् तदा कुतो नोत्तरयेच्च देवः?।
विश्वासहीनो यदि देवमाह्वयेत् सद्यः पतेत्तत्कृतनिग्रहांकुशः॥

People lack devotion to God. But they invoke Him in vain during all their troubles. If they sought His aid with faith and devotion why would He not come to their release ? If they scoff at Him and yet seek His aid, He will leave them to their misery.

नेच्चिदेनेन्दोडे मेच्चिदेनेन्दोडे सले मारुवोदेनेन्दोडे तनुवनल्लाडिसि नोड्डुवे नीनु ; मनवनल्लाडिसि नोड्डुवे नीनु ; धनवनल्लाडिसि नोड्डुवे नीनु. इवेल्लकञ्जदिर्दोडे भक्तिकम्पित नीनय्य कूडल संगमदेव ॥ ९ ॥

देवः प्रसन्नोऽभवदित्यसत्यं नहि प्रसाद्यः सहसा हि देवः ।
तेनास्मदीया तनुरेव शोध्यते मनश्च नो नित्यमवेक्ष्यते ननु ॥
तथैव नो वित्तसमाश्रितो मदः परीक्ष्यते तत्परतःप्रलोभनैः ।
अवञ्चिते मादृश एव देवः भक्त्या सकम्पः सकृपः खलु त्वम् ॥

We should not easily believe that God has approved of us and is satisfied with us. He examines our deeds and our thoughts and our worldlines. O Lord Sangama ! Only when You find that we are above temptetions and are humble with devotion, You will show us mercy and succour us.

नम्बदोडे गुरुविल्ल ; नम्बदोडे जंगमविल्ल ; नम्बदोडे प्रसादविल्ल ; परिणामविल्ल. नम्बि नम्बद संदेहसूतकिगे सोम्मु

सम्बंधविल्ल. नम्चद नेच्चद मानवंगे आनू इल्ल, नीनू इल्ल सिद्धलिङ्ग ? इल्ल इल्ल ॥ १० ॥

विश्वासहीनाय गुरूर्न विद्यते न जंगमो नैव तयोः प्रसादः ।
न चापि शांतिं लभते स मानवः तथैव लिंगं न कदापि विन्दते ॥

विश्वासयुक्तः. पुनरेव संशयं यदा हि धावत्यथ सूतकी भवेत् ।
तदैव देवो विजहाति तादृशं देवाद्वियुक्तस्तु निगीर्यते मृतः ॥

न चैव तस्याभ्युदयादियोगः न संशयात्मा सुखमाश्नुते भुवि ।

To the unbeliever, there is no Guru to teach selfrealisation, no Jangama to impress upon the practice of disinterestedness, no prasada and hence no realisation finally. If a believer again entertains a doubt, he becomes exceedingly sinful and will be rejected by God. Such a refused soul will be ignored as dead. Hence, to the unbeliever there is neither worldly achievement nor religious salvation.

स्वस्मिन्, स्वस्मा एव स्वांतरंगे निवसति स्वप्रभौ च यो विश्वसिति सः स्वीयं कल्याणं प्रभोरनुग्रहादेव लभत इत्याह—

नंबिद भक्तंगे कण्णनित्त ; नंबिद भक्तंगे कालनित्त ; नंबिद भक्तंगे होन्ननित्त. नंबिद भक्तंगे तन्ननित्त कूडलसंगय्य ॥ ११ ॥

श्रद्धान्वितायैव ददौ हि चक्षुस्तथैव पादौ च हिरण्यमेव ।
श्रद्धान्वितो नैव परिह्रियेत तस्मै स्वमेवार्पयतीह देवः ॥

God bestows on the faithful whatever they desire. He gives eyes to the blind, feet to the lame, wealth to the poor and even His own divine grace to the true devotee. He refuses them nothing.

द्वैताद्वैतवनोदि एनु माङुविरय्य, नम्म शरणर उरिगंरगागि करगदन्नक्कर? स्थावर जंगम ओन्दे एन्दु नंबदन्नक्कर? कूडल-सङ्गमदेव! वरियमातिन मालेयलेनहुदु? ॥ १२ ॥

असच्छरण्यार्चिषि यावभावं प्राप्यापि लीयेत न चेत्तदानीम्।
द्वैतादिवेदांतधिया किमु स्यादतो मनश्शुद्धिरिह प्रतीक्ष्या ॥
लिंगं चरं चैव समानदृष्ट्या न विश्वसेच्चेत्किमिहास्ति लभ्यम्।

What is the good of indulging in discussion about Dvaita and Advaita systems of Vedanta, if you do not melt like wax in the warmth of Sharanas' Illumination? What is the good of offering worship blindly without realising the identity of the Personal and Impersonal attitudes of God? What can be achieved by using empty words without acting according to their spirit?

एवं दृढविश्वासवान् भक्तः सर्वदा सर्वेन्द्रियैः परमात्मानमेव पश्यन् शृण्वन् जिघ्रन् स्पृशन् रसयन्ननुभवन् तच्चिन्तयैव कालं

यापयेदिति शरणा अपेक्षन्ते । महात्मा बसवार्यः स्वेष्टलिङ्गभूते गुरुसंगमार्ये दैनन्दिनप्रार्थनामेवं समर्पयन्नासीत्--

अत्तलित्त होगदंते हेळवन माडय्य तंदे ; सुत्ति सुळिदु नोडदंते अंधकन माडय्य तंदे ; मत्तोंद केळदंते किवुडन माडय्य तंदे ; निम्म शरणर पादवल्लदे अन्यविषयक्केळसदंते इरिसु कूडलसंगमदेव ॥ १३ ॥

वीक्षस्व भृत्यं गुरुसंगमार्य संप्रार्थये त्वां दृढभक्तियोगात् ।
यथा न गच्छेयमितस्ततोऽपि तथा कुरु त्वं कृपयैव पंगुम् ॥
यथा न पश्येयमिहैव किञ्चित् तथा कुरु त्वं कृपयांधकं माम् ।
यथा च नान्यच्छृणुयामिहैव तथा करु त्वं कृपयैव मूकम् ॥
तथाद्य मां पश्य यथा भवत्पदं विहाय नान्यत्परिचिन्त्यते मया ।

My revered preceptor Sangamadeva ! Look with mercy on me. I pray to You with earnest devotion. Please look at me mercifully. Make me lame and prevent me from roaming about here and there aimlessly. Kindly make me blind to everything attractive on earth, so that I may not be tempted to see anything. Make me dumb to every sound except praise of Your greatness. Mesmerise me by Your kind glance so that my mind shall not think of aught, besides Your sacred feet.

अजेयं मनः भगवत्पादारविन्दस्मरणेन निरोद्धुं यथाशक्ति प्रयतमानाः शरणाः तदीयकार्यनिर्वाहाय भगवदनुग्रहप्राप्तय एवं प्रार्थयन्ते--

कोंबेय मेलण मर्कटनंते लंघिसुवुदेन्न मनवु ; निंदल्लि निल्ललीयदेन्न मनवु ; होंदिदल्लि होंदलीयदेन्न मनवु. कूडल-संगमदेव ! निम्म चरणकमलदल्लि भ्रसरनागिरिसय्य ॥ १४ ॥

शाखास्वटन्मर्कटतुल्यमेतन्मनो मदीयं चलतीति सत्यम् ।
संसक्तमेतद्विषयोपभोगे न केवलं तिष्ठति सत्समूहे ॥
तथा प्रवेशं न ददाति मह्यं समाधियोगाय हृदन्तराळे ।
संप्रार्थये त्वां गुरुसंगमेश दयस्व भृत्यं भवदंशभूतम् ॥

My mind is like a monkey jumping from branch to branch. It is immersed in sensual pleasures, forsaking the association of the virtuous. It cannot concentrate on medetation of Your sacred presence. O Lord Sangama! Show me Your mercy by granting the power to hover about Your feet like a bee around flower.

एवं हृत्पूर्विकया प्रार्थनया भक्तः परमात्मनस्तादात्म्यं साध-यन् स्वं तत्पुत्रत्वेन भावयितुं याचते--

" इवनारव, इवनारव, इवनारव " एंदेनिसदिरय्य. " इव नम्मव, इव नम्मव, इव नम्मव " एंदेनिसय्य कूडलसंगमदेव ! निम्म मनेय मग एंदेनिसय्य ॥ १५ ॥

कोऽयं कुतो ह्येष समागतोऽत्र बन्धुश्च को वेति न चिन्तयैवम् ।
अयं मदीयो मम सेवकोऽयं मय्येव संयुज्यत एष भृत्यः ॥
इत्येव सञ्चिन्तय संगमेश त्वदीयभृत्यं सुतमेव भावय ।

Revered Guru ! Don't treat me as a stranger asking me "who is he ?, why has he come here ? and who is his relative ? ". Please consider me as your humble servant, solely attached ro You alone. Kinly treat me with love as if I were Your son.

एवं प्रार्थयमानमपि स्वं अधिकगुणः सर्वशक्तः प्रभुः कथं पुरस्करोतीति सन्देहस्सहजतयोदेति भक्तस्य हृदये । तथापि तादृशः संशयस्यावकाशो नास्तीति शरणाग्रगण्योऽल्लमप्रभः सदृष्ठान्तं कथयन् देवभक्तयोस्सामरस्यमुपपादयति––

एत्तण मामर ? एत्तण कोगिले ? एत्तणिन्देत्त संबन्धवय्य ? बेट्टद नेल्लियकायि, समुद्रदोळगण उप्पु एत्तणिन्देत्तवय्य संबन्ध ? गुहेश्वरलिंगक्केयू एनगेयू एत्तणिन्देत्त संबन्धवय्य ? ॥ १६ ॥

वन्यो रसालः क्व च कोकिलः क्व तथापि सञ्जायत एव संगः ।
महीध्रधात्रीलवणोदसारौ संबन्धमैतां किल नैकदेश्यौ ॥
गुहेशलिंगस्य ममापि संगः कथं कुतो वेति न शङ्कनीयम् ।

Where the flowering mango tree and where the cuckoo ! Still they come together in the

natural course. The myrabolan fruit grows on the hill-top and the salt is dissolved in the sea ; yet the two come together and make an agreeable food. I should not wonder, therefore, how or why I can come into contact with Guheswara (Impersonal Light)

प्राकृतिकतया भिन्नयोरेव दूरस्थयोर्वस्तुनोः संघटना जगति दृश्यते। तदा परमात्मांशस्य जीवस्य अंशिना परमात्मना सह संघटनायां जायमानायां किमु वक्तव्यम् । अतोऽत्र शङ्कायाः अवकाश एव नास्ति। अतो भक्तो दयामयस्य पितृसदृशस्य परमात्मनोऽर्चनायामवश्यं निरतो भवत्विति शरणा अपेक्षन्ते ॥

भगवदर्चनायां पुमानेव अर्हः तद्भार्यायास्तु न तत्राधिकार इति केचन वदन्ति। शरणास्त्विममाशयं नानुमोदन्ते; परन्तु उभावपि दम्पती यद्यैकमत्येन भगवन्तमर्चयेतांस्तदैव तदीयमर्चनं भगवते रोचेत, नो चेत् तत्परिहीयेत। अयमाशयः शरणाग्रगण्येन देवदासिमार्येणैवमुपवर्ण्यते--

सतिपतिगळोन्दाद भक्ति हितवागिप्पुदु शिवंगे. सतिपतिगळोन्दागदवर भक्ति अमृतदोळगे विषव बेरेसिदन्ते काणा, रामनाथ ॥ १७ ॥

संसारीणां भक्तिरियं शिवेष्टा भावैक्यरूपा यदि रामनाथ ।
एतादृशी भक्तिरनैकतायां सुधेव वर्ज्या गरळोपसृष्टा ॥

The devotion of a married couple will be pleasing to Siva if it indicates the unity of souls. If there is disunion, it would be like the combination of milk and poison and disgreeable to God.

एवं दंपत्योरेकमनसा भगवदर्चनां प्रवर्तयंत्योरपि स्वोपस्थितानां रूपादीनां दुरतिक्रमणीयतां परिहर्तुं भगवानेव प्रार्थ्य इत्याह——

विषयवेंब हसुर तन्देन्न मुन्दे पसरिसदिरय्य. हसुवेन बल्लदु हसुरेन्देळसुवुदल्लदे? एन्न विषयरहितन माडि भक्तिय मेवने दणिय मेयिसि सुवुद्धियेंबुदकवनेरेदु सलहय्य संगमदेव ॥ १८ ॥

रूपादिभोग्यान्विषयान्ममाग्रे देव प्रसारं कुरु मा कदापि ।
किमेष जानाति पशुस्तदानीं तृणाभिलाषं परिहृत्य नूनम् ॥
तथैव कुर्वन्विषयैर्विहीनं भृत्यं हि पश्यादभुतया हि दृष्ट्या ।
सद्भक्तिरूपं तृणमेव नित्यं यथेप्सितं भोजय मां त्वदीयम् ॥
तथैव मां सिञ्च सुवुद्धिवृष्ट्या याचे प्रभो कूडलसंगमार्य ।

O Lord Kudala Sangama! Don't tempt me with the pleasures of the senses. I would but succunb to them. I am after all, like an animal roaming about in search of green grass. Grant me the strength of mind so that I may ignore them. Kindly grace me with devotion so that it may feed me sufficiently to resist

them. Please nourish me with pure intellect so that I may devote myself to your worthy service.

एवं भगवत्प्रार्थनया समधिगतकिञ्चित्समाधानो भक्तः स्वीयं दृढनिर्धारमेवं स्वमनसे निवेदयति—

शिवशिव! शिवशिव! शिवशिव! एन्दोम्मे शिवन पूजिसि शिवनागु मनवे. हरहर! हरहर! हरहर! एन्दोम्मे हरन पूजिसि पुरहरनागु मनवे. लिंगवे! लिंगवे! लिंगवे! एन्दोम्मे कपिलसिद्धमल्लिकार्जुनलिंगव पूजिसि लिंगवागु मनवे ॥ १९ ॥

चित्त मदीयं शृणुताद्वचो मे शिवं समाहूय गुरो शिवेति।
तथा सकृत्पूजनतश्शिवस्य शिवो भव त्वं शिवभावनायाः ॥
सकृत्समाहूय विभो हरेति भक्त्या समभ्यर्च्य हरो भव त्वम्।
लिंगं समाहूय तदीयनाम्ना चिद्रूपमेतं गुरुमल्लिकार्जुनम् ॥
सकृत्समभ्यर्च्य भवं वितीर्य त्वमेव लिंगं भव चित्त नित्यम्।

O mind, hearken to my words with patience. If you even once in your lifetime invoke God Siva with piety and concentration, you will attain unity with Him and become a new entity itself. By thinking and worshipp-ing, even once, of Siva, you will indeed become Siva. By invoking God's name as Hara three times, you can overcome three attributes

(Gunas) and get your nature changed once for all. By thinking about Lingam, you will assume the state of Lingam.

एन्न मनवेंब गिळिय हुय्यल केळय्य ; संसारद दन्दुगळि सुत्ति सुळिवुत्तिदे नोडय्य. निम्म भक्तिय पञ्जरदोळगिक्कि, निम्म प्रसादद अमृतवनिक्कि शिव शिव एन्दोदिसय्य कूडलसंगमदेव ॥२०॥

मनःशुकस्यार्तनिनादमेतं निशामय श्रीगुरुसंगमार्य ।
संपीडितोऽसौ भवरोगदुःखादितस्ततो भ्राम्यति मोहदृष्ट्या ॥
निर्बध्य चैतं शिवभक्तिपञ्जरे दिव्यामृतं प्राशय वत्सभावात् ।
तथा कुरु त्वं सदयं यथायं ह्युच्चारयेदद्य शिवेति शब्दम् ॥

O Lord Sangama! Please listen to the aimless pursuits of my mind. Like parrot, it is going astray in search of pleasures. Imprison it in a cage, imbue it with devotion to You, so that it would swallow the nectar of your sacred name as Shiva.

परमात्मन्येव विश्वसितुं ततश्च परमैश्वर्यमनुभवितुं सन्नद्धाः शरणाः स्वीयं मनः वीर्यवत्तरया वाण्या एवमुपदिशन्ति—

हलवनोदिदोडेनु ? हलव केळिदोडेनु ? हलवनेणिसिदोडेनु ? हलव गुणिसिदोडेनु ? देसेदेसेगे हरिदु हंबलिसिदोडेनु ? मुंदुहिंदेन्नदे सन्दु सन्देहिसदे नंबु नंबेले मनवे कूडलसङ्गय्यन ॥२१॥

श्रुत्वापि किं स्यात्पठनाच्च किं स्यात्तथैव किं वा गणनाच्च भूयः ।
तथैव संख्यानवशाद्धि किन्तु संप्राप्यते दिक्षु विधावनाच्च ॥
हित्वा पुरस्तादथ पृष्ठतश्चेत्येतादृशं भावमशेषतश्च ।
त्यक्त्वा तु डोलायनमेव चित्त समाश्रय त्वं गुरुसङ्गमार्यम् ॥

Mind ! what is the good of reading or hearing much or counting the favourableness of planetary positions ? What can be realised by counting the wordly chances of success ? What can be attained by roaming about in various directions ? If you leave all that and concentrate on the worthy feet of Lord Sangama, you will realise the end of life.

करगिसि एन्न मनद काळिकेय कळियय्य. पुटविक्कि वण्णक्के तन्देन्न ओरेगे होद्दिसि नोडय्य. कडितक्के बडितक्के तन्देन्न कडियाणीय माडि निम्म शरणर पादक्के तोडिगेय्य माडि सलहुवुदय्य कूडलसंगमदेव ॥ २२ ॥

भवाग्निमध्ये परिशोध्य पूर्वं मालिन्यमेतं मनसो निवर्त्य ।
तदीयनैर्मल्यपरीक्षणाय सुखादिरूपे निकषे निघृष्य ॥
तदीयसौवर्ण्यविवर्धनेन मदीयचारित्र्यविशेषतुष्टः ।
त्वदीयभक्तस्य विशुद्धपादयोः संशोभनार्थं विरचय्य कंबुम् ॥
तथैव मां त्वं समुपेतशुद्धिं विधेहि भक्तं गुरुसङ्गमार्य ।

Lord Sangama ! Kindly liquify my impure mind in the fire of Samsara. Test it with the touchstone of pains and pleasures of the world. If You are satisfied with the flawlessness of my mind, You may consider it as pure gold and then turn it into an ornament to adorn the holy feet of Your Sharanas.

भगवदाराधनसक्तो भक्तः यथालाभसन्तुष्टो यदि लोके वसेत्तदैव तदीयमर्चनं भगवते रोचेतेत्याह—

आशे एंबुदु अरसिङ्गल्लदे शिवभक्तरिगुण्टे एले अय्य ? रोषवेंबुदु यमदूतरिगल्लदे अजातरिगुण्टे एले अय्य ? ईसक्किय आशे निमगेके ? ईश्वरनोप्प ॥ २३ ॥

आशा हि संशोभत एव राज्ञि युज्येत सा किन्तु शिवस्य भृत्ये ? ।
रोषोऽपि युज्येत यमस्य दूते कथं स युज्येत सुभक्तियुक्ते ? ॥
सामान्यजीवीव च देहदृष्ट्या जातोऽपि भक्तस्स अजात एव ।
अयं ह्यजातो नहि याचतेऽन्यं न कांक्षते तन्मनसा यथेष्टम् ॥
कुतस्त्वैतावति तण्डुले स्पृहा नैतेन तोषं समुपैति शंभुः ।

Ambition may be all right in a King as he has to widen empire. How can it be justified in a devotee of Siva ? Anger may shine well in the servants of Yama as they feel it essential for the discharge of their duty. How can it be

excused in a person of staunch faith and devotion ? The devotee may be an ordinary mortal materially. But spiritually he is as if unborn and eternal. He has no need to beg anybody for anything.

भक्तः भगवदाराधनतत्परोऽपि लोके सामान्यमानव इव वसन् स्तुतिनिन्दयोः श्रवणेन यथा निर्विकारो भवेत् तथा आत्मानं रक्षितुं समाहितचित्तः स्यादित्याह--

वेट्टद मेलोन्दु मनेय माडि मृगंगळिगञ्जिदडेन्तय्य ? समुद्रद तडियल्लि मनेय माडि नोरेतेरेगळिगञ्जिदडेंतय्य ? संतेयोळगोंदु मनेय माडि शब्दक्के नाचिदडेंतय्य ? चन्नमल्लिकार्जुनदेव केळय्य. लोकदोळगे हुट्टिद बळिक स्तुतिनिन्देगळु बंदडे मनदल्लि कोपव ताळदे समाधानियागिरबेकु।। २४ ।।

गृहं विरच्यैव गिरौ मृगाश्रये कुतो हि बिभ्येन्नु मृगेभ्य एषः ? ।
समुद्रतीरे शरणं विरच्य कुतो नु बिभ्येत्खलु तत्तरङ्गात् ? ।।
वसन्विपण्यां खलु तद्रवाद्रवात् कथं बिभीयादिह जीव एषः ? ।
लोके जनित्वा स्तुतिनिन्दयोर्द्वयं प्राप्यापि चित्ते कुरु मा क्रुधं बुध ।।
समाहितस्त्वं भव नित्यमेव तदेतदाश्रावय मल्लिकार्जुन ।

If man resides on the suburbs of the mountain which is infested with wild animals why should he be afraid of those animals ? If

he resides on the ocean shore which is encroached by waves, why should he get afraid of those waves? If he resides near a noisy market place, why should he get frightened with noise? Therefore one must remain unaffected by one's surroundings and endure everything with equanimity of mind.

विकारवतो मनसः आश्रयभूते देहे वसन्नपि भक्तः तदभिमानरहितश्चेत् निश्चिन्तस्सन् भगवदर्चनां निर्वहेदित्याह—

हाविन बाय हल्ल कळेदु हावनाडिसबल्लरे हाविन संगवे लेसु कण्डय्य! कायविकारव तोरेदरे कायद संगवे लेसु कण्डय्य! तायि रक्कसियादन्ते कायविकारवु· चन्नमल्लिकार्जुनय्य! नीनोलिदवरु कायगोण्डिद्दरेनवेड ॥ २५ ॥

उत्पाट्यते यद्यहिदन्तपङ्क्तिस्तदा च तेनैव रमेत मानवः।
तथैव देहे विषपाप्मनश्च निष्कासने तत्र वरं हि वासः॥
मातैव चेद्राक्षासभावयुक्ता शिशुर्न रक्ष्येत तथैव लोके।
तथैव काये विकृतिस्तु जाता जीवं न रक्षिष्यति सत्यमेतत्॥
य एव देहे गुरुमल्लिकार्जुन त्वयानुगृह्येत स एव धन्यः।

If the serpents' tooth is removed, man may play with it safely. Similarly by cleansing the body of its evil tendencies, the soul can dwell in it safely. A body which is sensual can

do no good to the soul. O Lord Mallikarjuna ! bless me so that my body can become pure and be a fit residence for my soul.

सर्पे विद्यमानः विषपूर्णो दन्तः यद्युत्पाट्यते तदा तेन सहैव क्रीडितुं शक्नोति मानवः। तथा देहे विद्यमानः आत्माभिमानः यदि संपूर्णं विसृज्येत तदा तत्र आत्मनो वसतिर्न हानिकरो भवेत्। देहे तदा तदा जायमानो विकारः आत्मानं यथा न बाधेत तथा स आत्मा सर्वदा परमात्मचिन्तन एव स्यात्। तदैव तस्य देहो देवालयो भवेत् ; तदीयं जन्म च सफलं भवेत् ॥

एवं देहे निर्विकारतया तिष्ठन् भक्तः प्रपञ्चे विभिन्न-स्वभावेषु सर्वेष्वपि सोदरभावनया व्यवहरन् मृदुवचनैस्तान् संतोषयन् सर्वत्र परमात्मानमेव पश्यन् स्वस्मै स देवो यथा न कुप्येत्तथाऽत्र वसेदित्याह--

“ एनु बन्दिरि हदुळविद्धिरि ” एन्दरे निम्म मैसिरि हारि होहुदे ? “ कुळ्ळिरि ” एन्दरे नेल कुळि होहुदे ? ओडने नुडिदरे शिर होट्टेयोडेवुदे ? कोडलिल्लदिद्दरोन्दु गुणविल्लदिर्दडे केडहि मूग कोय्यदे माण्बने कूडलसङ्गमदेवनु ॥ २६ ॥

कदाऽऽगताः किं कुशलं समन्तादित्येव पृष्टे किमु रूपहानिः ?।
इहास्यतामित्यनुभाषसे चेत्तस्यां च भूमौ किमु रन्ध्र आपतेत् ?॥
तदैव किं ते शिर एव भिद्यते तथोदरं किं तव भिद्यते नु ?।

त्वय्येव किञ्चिद्यदि नास्ति दातुं तदा वचो ब्रूहि शुभं हितावहम् ॥
यद्येप एवापि गुणो न विद्यते तदा न कुप्येत्किमु सङ्गमार्यः ।

If you ask people graciously about their welfare whenever you meet them, do you suffer any loss thereby? If you ask them to sit by your side whenever they approach you, does it cause a hole in the ground or split your head or chest? If you have nothing to offer them, should you not at least spare them a kind word? Else, Lord Kudala Sangama should get angry with you.

एतादृशं सद्वर्तनं यदि न स्यात्तदा भक्तः लौकिकं सुखमपि न प्राप्नुयात्। एवमसुखी अशान्तश्च भूत्वा सः कथं वा व्यवहार-मध्ये परमात्मानं चिन्तयेदर्चयेद्वा। सः त्रिकरणशुद्धो यदि न भवेत्तदा स्वीयं प्राप्यमपि वस्तु न लभेत। सः यद्यदिच्छति तत्सर्वमपि देवो न प्रददाति। देवस्तु व्यवहारेऽतीव निपुणो वर्तते। भक्तो देवाय नीरसफलद्वयं दत्त्वा तस्मादधिकं फलं यद्यपेक्षेत तदा सः कथं तल्लभेत। देवं तथा वञ्चयितुं न शक्यत इत्याह--

धरणिय मेलोन्दु पिरिदप्प अङ्गडियनिक्कि हरद कुळ्ळिर्दं नम्म महदेवशेट्टिः ओम्मनवादरे ओडने नुडिवनु; इम्मनवादरे नुडियनु. काणिय सोल; अर्धकाणिय गेल्ल. जाण नोडव्व देवनु ॥ २७ ॥

महदेवनामा वणिजां वरिष्ठः प्रसार्य पण्यानि महन्ति भूमौ ।
सन्तिष्ठते विक्रयणार्थमेव विश्वोऽयमस्यैव हि पण्यवीथी ॥
सर्वे वयं चेदृजुमार्गयायिनो लभ्यानि वस्तूनि लभामहे तदा ।
यद्येकमत्यं व्यवहर्तृभिश्चेत्तदैव श्रेष्ठी विवृणोति भावम् ॥
नो चेदसौ तैर्न कदापि भाषते तदा जनैः शून्यहृदा निवर्त्यते ।
अल्पोऽपि लोभो नाहि दृश्यतेऽस्मिन् लाभस्य गन्धोऽपि न विद्यते तथा
देवस्य नैपुण्यविशेष एषस्त्वादर्शभूतो हि तदीयलोके ।

There is a great merchant called Mahadeva on this earth. His merchandise is spread all over the universe. If you approach Him in the proper manner, you will get whatever you deserve. He is not greedy after profit. He does not budge an inch in His dealings, like giving or receiving. If you are lacking in sincerity and devotion, while you approach Him, you will be sent back with an empty hand. Therefore you should be careful in all your dealings with Him.

एतादृशी त्रिकरणशुद्धिर्यदि स्याद्भक्ते तदैव तत्कृतमर्चनं भगवते रोचेत। करणत्रयसारूप्ये सत्येव भक्तहृदयस्थितो भगवान् अनुभवगोचरो भवेत्। वचनेऽनृतं, मनसि कषायश्च यदि स्यातां तदा हृदये सन्नपि परमात्मा न स्फुरेदेव। गृहे यः कश्चन वसेद्यदि

तदा तत्रान्तर्बहिश्च शुद्धिः स्यात्। यद्यशुद्धिस्तत्र दृश्येत तदा तत्र न कोऽपि वसतीति सर्वे जानन्ति। तथैव हृदये यदि नैर्मल्यं न स्यात्तदा तत्राव्यक्ततया वर्तमानः परमात्मप्रकाशो नानुभूयेत। अयमाशयो महात्मना बसवार्येणैवमभिव्यज्यते—

एन्न नडेयोंदु परि; एन्न नुडियोंदु परि, एन्नोळगेनू शुद्धविल्ल नोडय्य. नुडिगे तक्क नडेय कण्डोडे कूडलसंङ्गम-देवनेन्नोळगिर्पनय्य ॥ २८ ॥

अन्या मदीया कृतिरेव पश्य वचस्तथान्यत् हृदि नास्ति शुद्धिः।
यद्यैकरूप्यं वचने कृतौ च तदाऽन्तरे तिष्ठति सङ्गमार्यः ॥

A man who talks in one way and acts in another is not pure inside. Only when one dwells in God does one talk and act faithfully.

एवं त्रिकरणशुद्ध्या पूर्णविश्वासेन यः परमात्मानमर्चयति स एव तदनुग्रहं लभते। एतदर्चनेऽपि सः दासभावमाश्रयेत्। स्वीयं देवं यः स्वयमेव भक्त्या अर्चयति स एव निर्दिष्टं फलं विंदते। स्वीयमर्चनं अन्यस्य सकाशात् यः कारयति सः तादृशः अर्चनस्य फलं न विंदत एवेत्याह—

तन्नाश्रयद रतिसुखवनु, तानुम्ब ऊटवनु बेरे मत्तोब्बर कैयल्लि माडिसबहुदे? तन्न लिंगक्के माड्व नित्यनेमवनु ता

माडबेकल्लदे बेरे मत्तोब्बर कैयल्लि माडिसबहुदे? केम्मने उपचारक्के माड्डवरल्लदे निम्मनेत्त बल्लरु कूडलसंगमदेव? ॥ २९ ॥

स्वकीयभोगं स्वयमेव नाश्नन्नन्यैश्च किं कारयितुं हि युक्तम् ।
स्वस्यैव लिंगं स्वयमेव नार्चयन्नन्यैश्च तत्कारयितुं न युक्तम् ॥
एवं कृते कूडलसंगमार्य जानन्ति ते किं तव वैभवं तत् ।

Can a man attain sensual pleasures without seeking them by his own efforts? Can a man get his hunger satisfied if he does not himself swallow the food? Can a man earn merit by getting his Linga worshipped by proxy? How could such a man realise the full measure of the Divine personality of Lord Sangama?

एवं समाहितस्सन् भक्तः स्वोपास्यं देवं स्वयमेव भक्त्या अर्चयन्नपि लोके यद्यच्च पश्येत् तेन संप्राप्तविकारः देवमेव विस्मरेदतो देवविलासं यथामति ज्ञातुं प्रयतेत भक्त इत्याह—

नेनेव मनक्के होन्न तोरिदे. नोड्डुव कंगळिगे हेण्ण तोरिदे. पूजिसुव कैगळिगे मण्ण तोरिदे. इन्ती त्रिविधक्के त्रिविधव तोरि नी बेराद विन्नाणक्के बेरगादेनय्य अमरगुण्डद मल्लिकार्जुन ॥ ३० ॥

त्वामेव सञ्चिन्तयते हृदे तु प्रादर्शयस्त्वं तपनीयमेव ।
त्वां पश्यते नेत्रयुगाय नारीं प्रादर्शयस्त्वं खलु जीवलोके ॥

त्वदीयसेवानिरताय हस्तद्वयाय मृत्सा ननु दर्शिता त्वया ।
एवं त्रयाणां त्रितयं प्रदर्श्य मामत्यजस्त्वं गुरुमल्लिकार्जुन ॥
त्वदीयवैचित्र्यममोघमेतन्न दृश्यतेऽन्यत्र महानुभाव ।

O Lord Mallikarjuna! To my mind which is bent on thinking of You alone, You have Yourself shown the distraction of Gold. Similarly to my eyes, bent on looking at You, You have shown the distraction of woman. To my hands bent on serving You alone, You have shown the distraction of gross materials. Thus have my three senses been left to stray from you, but You have remained separate and unaffected. I feel astonished at your clever act.

भक्तः शिवार्चनासक्तोऽपि कामिनीकाञ्चनादीनामार्जनेऽनुभवे च विमतिर्न भवेदित्याह—

भक्तन मन हेण्णिनोळगादरे विवाहवागि कूडुवुदु· भक्तन मन मण्णिनोळगादरे कोण्डु आलयव माडुवुदु· भक्तन मन होन्निनोळगादरे बळलि दोरकिसुवुदु कपिलसिद्धमल्लिकार्जुन॥२१॥

भक्तो यदीप्सोत्स्त्रियमात्मना तदा शिवाज्ञया तां स्त्रियमुद्वहेन्ननु ।
तस्यैव चित्तं यदि मृत्तिकायां तदालयं संरचयेन्मनस्वी ॥
तदीयचित्तं यदि स्वर्णमग्नं संपादयेत्क्लेशवशात्तदेव ।

If a devotee's mind dwells on woman, there is no objection to his marrying her. If

it dwells on gross materials, he should engage himself in constructive work. If it dwells on money, he should earn it, even if it involves him in endless toil.

भक्तो गृहस्थः पत्न्या सहैव मिळितस्सन् देवार्चनं कुर्यात् । पत्न्यपि पतिरिव देवमर्चयितुं प्रभवति । स इव साऽपि देवांश-भूतत्वात् देवसाक्षात्काराय कल्पत इत्याह—

ता माडिद हेण्णु तन्न तलेयनेरित्तु· ता माडिद हेण्णु नारायणन एदेयनेरित्तु· अदुकारण हेण्णु हेण्णल्ल; हेण्णु राक्षसियल्ल; हेण्णु कपिलसिद्धमल्लिकार्जुन नोड ॥ ३२ ॥

स्वयं कृता सा वनिता स्वयंभुवश्शिरस्समारुह्य समास्थिता पुरा ।
तथैव तत्सृष्टिमुपेत्य लक्ष्मीर्हरेर्हृदन्ते विजहार पूर्वम् ॥
तस्माच्च योषिन्न हि योषिदेव न राक्षसी किन्तु पराऽस्य शक्तिः ।

The female created by Brahma sat on his head. The female created by Vishnu sat on his chest. Therefore woman is not just a woman, nor she is a demon, but she is the overmastering force itself.

भक्तः देवार्चनमग्नोऽपि स्वपत्नीभोगादिकं व्यवस्थितक्रमेण अनुभवेदेव । अतश्च इन्द्रियनिरोधः प्रमादकार्येव भवेत् । तेन च स्वीयार्चनमपि निरुद्ध्येतेत्याह—

इन्द्रियनिग्रहव माडिदरे होन्दुवुवु दोषङ्गळु· मुन्दे बन्दु काडुवुवु पञ्चेन्द्रियङ्गळु· सतिपतिरतिसुखव बिट्टरे सिरियाळ-चङ्गळेयरु? सतिपतिरतिसुखभोगोपभोगविळासव बिट्टने सिन्धु-बल्लाळनु? निम्म मुट्टि परधनपरसतियरिगेळसिदरे निम्म चरणक्के दूर कूडलसङ्गमदेव ॥ ३३ ॥

यदीन्द्रियं रुध्यत एव मर्त्यैस्तदा भवेद्दोषविदूषितत्वम् ।
भोगैकसक्तः सिरियाळभक्तस्तत्याज किं भोगसुखं विरक्तः ? ॥

वल्लाळ एषः किमु भोगभाग्यं तत्याज स्वामिन्गुरुकूडलार्य ? ।
भवन्तमाश्रित्य परस्त्रियं तथा परस्वमिच्छन्हि विसृज्यते तदा ॥

If you suppress the sense organs, evils will result. They themselves will come forward to drag you into a wrong path. Devotees like Siriyala and Ballala had not forsaken their family obligations. Even with family enjoyments, they dedicated their lives to God's service. It is only illicit sensual indulgence that is disliked by God and is held offensive.

एवं स्वपत्न्या सह मानवो भगवन्तमर्चयन् प्रपञ्चं शुद्धदृष्ट्या यदि पश्येत्तदा तस्य भावनैव परिवर्ततेत्याह—

एल्लि नोडिदडल्लि मनवेळसिदरे, आणे निम्माणे निम्म प्रमथराणे. परवधुवनु महादेवियेम्बे कूडलसंगमदेव ॥ ३४ ॥

यद्यद्धि पश्यामि तदेव नित्यं मनो मदीयं स्मरतीति चिन्ता ।
मा भूच्च ते कूडलसंगमार्य मद्वर्तने त्वं प्रमथाश्च मानम् ॥
परस्त्रियः शर्ववधूस्वरूपाः इत्येष एवास्ति विनिश्चयो मे ।

O God Kudala Sangama, I swear in the name of You and Your devotees that I will not covet women wherever I cast my eyes in my worldly dealings. I consider every woman as Goddess Herself.

एवं सपत्नीको गृहस्थः शुद्धभावनया भगवदाराधनतत्परः स्वदोषपरिहारद्वारा स्वशुद्धयै स्वात्मपरीक्षामग्नः अन्यरन्ध्रान्वेषणपरो मा भूदित्याह——

लोकद डोङ्क नीवेके तिद्दुविरि? निम्म निम्म तनुव सन्तैसिकोळ्ळि; निम्म निम्म मनव सन्तैसिकोळ्ळि. नेरेमनेय दुःखक्के अळुववर मेच्च कूडलसंगमदेव ॥ ३५ ॥

यूयं किमर्थं जनवक्रदृष्टेर्निवृत्तये सम्मिळिता यतध्वे ।
स्वं स्वं शरीरं प्रथमं विशोध्य मनस्समाधित्सत मा परस्य ॥
दुःखाय शोचिष्यथ सत्यमेतद्देवो न विश्वासमियात्तु तेन ।

Why do you seek to correct other's faults? Can you not try to correct your own bodily faults and your own mental faults. Men who

weep for others' incorrigible dealings cannot secure grace from Kudala Sangamadeva.

एवं परविगर्हणविदूरो भक्तः स्वकायकेन यल्लभते तेनैव सन्तुष्टस्सदा ईश्वरचिन्तन एव स्यादित्याह--

हरनीव कालक्के सिरि बेन्नल्लि बक्कु. हरिदु हेद्दोरे केरेय तुंबिदन्ते नेरेयद वस्तु नेरेवुदु नोडय्य. अरसुपरिवारकैवार नोडय्य. परमनिरञ्जननु मरेव कालक्के तुंबिद हरविगे कल्लु तागिदन्तय्य कूडलसङ्गमदेव ॥ ३६ ॥

यस्मै यदा दास्यति वित्तमीशस्तदैव धावेत्त्वरितं हि तद्धनम् ।
कुल्यास्तटाकं परिपूरयेयुर्यथा प्रधाव्यैव तथा प्रसादात् ॥
अलभ्यलाभो भवतीति जानन्निधेहि चित्तं गुरुपादपद्मे ।
सर्वाणि सौख्यानि तदा त्वदन्तिकं समापतेयुः शिवसंप्रसादात् ॥
घटोऽश्मपातादिव हन्यसे निरञ्जनोऽयं यदि विस्मरेत्त्वाम् ।

When God gives you wealth, it automatically comes to you without stint like a river in flood. You get everything thereby. When God forgets you, you lose all, like a full pot hit by a stone.

एवं यथालाभसन्तुष्टो भक्तः देवं कथमर्चयति ? तद्विधानं च कीदृशम् ? तेन च लभ्यं फलं किम् ? एतत्सर्वं सुविशदमाह–

तनुव तोण्टव माडि, मनव गुद्दलिय माडि अगेदु कळेदे-नय्य. भ्रान्तिय बेर ओडेदु संसारद हेण्टेय बगिदु बित्तिदेनय्य ब्रह्मबीजव· अखण्डमण्डलवेम्ब भावि· पवनवे राटाळ· सुषुम्नदि-दुदकव तिद्दि बसवगळैवरु हदगेडिसिहरेंदु समते सैरणे एम्ब बेलियनिक्कि आवागळू ई तोण्टदल्लि जागरणविद्दु ससिय सलहिदेनु काणा गुहेश्वर ॥ ३७ ॥

स्वदेहमेवोपवनं विधाय मनःखनित्रेण च तं खनित्वा ।
भ्रान्तिं समूलां परिहाय चित्ते संसारलोष्टं विनिभिद्य युक्त्या ॥
स्वान्ते निखन्यां परमात्मबीजं वाप्यास्सहस्रारसमाह्वयायाः ।
प्राणाख्ययन्त्रादुदकं सुषुम्नया निषिच्य सम्यक्परिपोषितं मया ॥
पंचैव गावो न हि कुर्युरत्र विनाशमित्येव विचिंत्य भक्त्या ।
क्षमासमत्वाख्यवृतिं विधाय तत्रावधानेन तदेव सस्यम् ॥
गुहेश्वर त्वत्कृपया व्यवर्धयं ततश्च सर्वो भवतो विलासः ।

Guheswara ! My body is a garden and mind is a pickaxe with which I pulled out evil roots of ignorance. I broke the humps called bondage and sew the seed of Brahman. The head resembling the wide universe serves as a well to be a store of nectar. With the help of wind serving like pully, I drew nectar from the well by way of Sushumna tube. I prepared

the fence in the form of tolerance and patience so that the five organs of sense would not cause destruction to the seed which grew into the shape of creeper. Both day and night, I kept perfect watch over the creeper and proteeted the crop by virtue of Your grace.

एवं शरणाग्रगण्यः अल्लमप्रभुः स्वदेहोपवने गुहेश्वरप्रसादात् कथं ब्रह्मवृक्षं प्ररुह्य पंचेंद्रियसकाशात् संरक्ष्य ब्रह्मानुभवमविन्दतेत्ययमंशः सम्यक् निरूपितः। अनेनैव मार्गेण सर्वे च भक्ताः समग्रेण साधनेन ब्रह्मानुभवं स्वदेह एवानुभवितुं पारयेयुरेव। तथैव भक्तिमार्गानुयायी वसवार्यः स्वभक्तिमहिम्ना स्वीयभगवदर्चनया भगवत्सामरस्यं कथमन्वभवदित्यंशोऽत्र स्पष्टीक्रियते--

भक्तियेम्ब पृथ्वियमेले गुरुवेम्ब बीजवंकुरिसि लिङ्गवेंब एलेयायित्तु. लिंगवेंब एलेयमेले विचारवेंब हूवायित्तु ; आचारवेंब कायायित्तु निष्पत्तियेंब हण्णायित्तु. निष्पत्तियेंब हण्णु तोट्ट बिट्टु कळचि बीळुवल्लि कूडलसंगमदेव तनगे बेकेंदु एत्तिकोण्ड ॥३८॥

भक्त्याख्यभूमेरुपरि प्ररूढे गुरौ तु लिंगे छदतामुपेयुषि।
तस्योपरिष्टाद्धिषणाख्यपुष्पे क्रिया शलाटुत्वमवाप पश्चात्॥
स एव तस्मादनु सत्फलत्वं निष्पत्तिरूपं समपद्यतात्र।
तस्मिंश्च निष्पत्तिफले तु वृन्तात् श्लथं पतत्येव तदुन्निनाय॥
वात्सल्यपूर्णो गुरुसांगमेशः तदीयवात्सल्यफलोऽस्मि जातः।

In the ground called devotion, the seed called Guru was implanted. The leaf sprouted as Ista-Linga. On that leaf, there arose the flower in the shape of vichara (spiritual thought). The crop became known as Achara (rightful action). The fruit of achievement thereby became known as realisation of myself. When such fruit got disconnected from the tree and fell down, Kudala Sangamadeva snatched it with open arms as desired by Him.

महात्मा बसवार्यः कूडलसङ्गमक्षेत्रनिवासिना महागुरुणा अनुगृहीतं स्वीयमिष्टलिङ्गं तन्नान्मैवाह्वयन्नासीत्। सः स्वभक्त्याधारेण गुर्वनुग्रहात् लिङ्गं लब्ध्वा तच्च स्वप्राणभावनया समर्च्य ज्ञानक्रिया-समन्वयमार्गेण लिङ्गप्राणयोरैक्यरूपां निष्पत्तिमधिगम्य सामरस्यं कथमन्वभवदित्यंशः हृदयङ्गमया रीत्या अत्रोपवर्णितः। तस्मिंश्च सामरस्येऽनुभूयमाने सति तादृशं निर्मलं मुक्तात्मानं सङ्गमदेवः स्वस्मिन्नेव विलीनं कृत्वा मुक्तस्वरूपहान्या शिवभावेनैव लोकं प्रदर्श्य तथैव लोककल्याणसाधनाय तमुपायुङ्क्त। शिवार्चनेन लब्धव्यं फलं ईदृशमेव। अनेनैव सर्वेऽपि जीवाः स्वजन्मसार्थक्यं लभन्ते। इदमेव साधुजीवनमिनि शरणाः भावयन्ति। भगवत्प्रीतिपात्रं भूत्वा तत्सेवया, तदन्तर्यामिनो जीवान् भगवद्भावनया च प्रीणयन् तस्मिन्नेव भगवति हृदयस्थे सामरस्यमनुभवन् अंगाख्यो निर्मलो जीवः साक्षात् लिंगमेव भूत्वा लोककल्याणायात्र निवसेदित्यर्थोऽत्र स्पष्टमवगम्यते॥

सामरस्यमनुभवतस्तादृशः भक्तस्य सद्वर्तनमत्रोपवर्ण्यते--

होन्निनोळगोन्दोरेय, सीरेयोळगोन्देळेय इन्दिगे नाळिगे बेकेन्देनादरे, निम्माणे, निम्म पुरातनराणे. निम्म शरणरिगल्लदे मत्तोन्दनरियेॆ कूडलसंगमदेव॥ ३९ ॥

सुवर्णराशीषु च लेशमात्रं तन्तुं च वासस्स्वहमेकमेव ।
एतद्दिनार्थं परतोदिनार्थं यदि प्रतीक्षे शरणं तदा भवान् ॥
तथा भवत्पारिषदाः प्रमाणं भवन्तु मह्यं गुरुसङ्गमेश ॥ ३९ ॥

If I desire for the use of to-day or tomorrow even a single piece of Gold or cloth, if I thus fix my mind on wealth and woman, I swear that I am doomed. I have devoted my mind entirely to the Sharanas and none else.

ब्रह्मपदवियनोल्ले, विष्णुपदवियनोल्ले, रुद्रपदवियनोल्ले, मत्ताव पदवियनोल्लेनय्य. कूडलसङ्गमदेव! निम्म सद्भक्तर पादव-नरिदिप्प महापदवियने करुणिसय्य ॥ ४० ॥

नैवाभिकांक्षे कमलोद्भवस्य स्थानं न विष्णोः पदवीमपीह ।
तथैव शंभोः पदवीमथान्यां न कामये संगमदेव नित्यम् ॥
त्वद्भक्तपादार्चनसक्तभृत्यस्थानं तु कांक्षे नियमेन देहि ।

I seek not the creator's status. I seek not Vishnu's position. I seek not Kalarudra's

place also. But I seek only the worship of the worthy feet of your choice disciples.

एवं फलापेक्षारहितो भक्तः सर्वदा सुखदुःखादिकं सर्वमपि शिवप्रसादभावनया स्वीकुर्वन् इहैव प्रसादकाये नित्यसुखमनुभवन् वर्तते। तस्य तु लोकस्सर्वोऽपि देवालय एव। निंदकोऽत्यात्मीय एव वंधुरिति तेन परिगण्येत। तस्य प्रापञ्चिकं जीवनमेवं वर्तते ॥

होयिदवरेन्न होरेदवरेंबे, वैदवरेन्न वंधुगळेंबे, निन्दिसिदवरेन्न तायितन्देगळेंबे, आळिगोण्डवरेन्न आळ्देरेंबे, जरिदवरेन्न जन्म-वंधुगळेंबे, कोण्डाडिदवरेन्न होन्नशूलदलिक्किदवरेंबे सङ्गमदेव ॥४१॥

अवैमि चाक्तोशकमेव वंधुं अवैमि पीडाकरमेव रक्षकम् ।
अवैमि मातापितरौ विनिंदकं अवैमि मत्पालितमेव पालकम् ॥
मद्दूषकं चैव हि जन्मबंधुं अवैमि मत्स्तावकमेव नित्यम् ।
सूवर्णशूलोपरि निक्षिपंतं तदेतदाकर्णय संगमेश ॥

Those who beat me, I consider as my protectors. Those who injure me, I regard as my Kinsmen. Those who abuse me, I consider as my parents. I regard my servants as my masters. Those who insult me are treatcd as my blood relations. But those who praise me are treated as persons who punish me in a golden pillory.

होय्दरे होय्गलु कय्यमेले ; बय्यरे बय्गकु कय्यमेले। हिंदणजननवेनादोडागलि इन्दिन भोगवु कय्यमेले, कूडलसंगमदेव निम्म पूजिसिद फल निम्म कैय्यमेले ॥ ४२ ॥

संहन्यते चेदिह हन्य एव विनिन्द्यते चेदिह निन्द्य एव ।
प्राग्जन्मकृत्यं न विचिन्त्यमेव तथैव भोगोऽद्यतनस्तु हस्ते ॥
संप्राप्यते कूडलसंगमेश फलं भवत्पूजनतश्च हस्ते ।

If people beat a person, their own hands get hurt. If they abuse him, it falls on themselves. Whatever the previous birth may have been, every one is concerned with the present enjoyment. Whatever a person does at present is sure to be enjoyed by him. Hence one who is engaged in the worship of God is sure to attain its fruit at present.

एवं भक्तस्सदा श्रद्धया भगवदाराधनतत्परोऽपि स्वीयां भक्तिं पूर्णयितुमिच्छुस्तां परीक्षमाण एव वर्तेत। तद्यथा—

भक्तियिल्लद बडव नानय्य. कक्कय्यन मनेयलु वेडिदे. चिन्नय्यन मनेयलु वेडिदे. दासय्यन मनेयलु वेडिदे. एल्ल पुरातनरु नेरेदु भक्तिभिक्षवनिक्किदरे एन्न पात्रे तुंबित्तु कूडलसंगमदेव ॥४३॥

धनेन युक्तोऽपि दरिद्र एव भक्तेरभावादहमस्मि देव ।
तस्मात्तु कक्कय्यगृहे तथैव चिन्नय्यगेहेऽपि कृतैव भिक्षा ॥

तथैव गेहेऽपि च भिक्षुकस्य भक्तेस्तु भिक्षा हि कृता मयाद्य।
सर्वैश्च भक्तैस्समवेत्य भक्तेर्भिक्षाप्रदानाच्च मदीयपात्रम् ॥
सम्यक्समापूर्यत संगमेश तयैव तृप्तोऽस्मि न चान्यथाहम् ।

I am a poor man in devotion. I went and begged it from Kakkaiya, from Chinnaiya and from Dasaiya. Those pious men gave me alms of devotion and filled my bowl. I feel satisfied with this alone.

भक्तेर्विकासाय बहवश्च आतङ्कास्संभवंति । भक्तं अनेके जनाः वंदितुं प्रशंसितुं च आरभन्ते । अनया प्रशंसया सन्तुष्टो भक्तः अहङ्कारवशंगतः आंतरंगिकं विश्वासं विहाय बाह्यविषयेष्वेव संसक्तिमभिवर्धयति । अतस्सः सर्वदा प्रशंसामपि निन्दया समां मन्यमानस्तदर्थं भगवति प्रार्थनां समर्पयेदित्याह—

एन्नवरोलिदु होन्नशूलदल्लिक्किदरेन्न होगळि होगळि· एन्न होगळते एन्ननिम्मेय्गोण्डित्तल्ल! अय्य! निम्म मन्नणेये मसेदलगागि तागित्तल्ल! अय्यो! नोन्देनु सैरिसलारेनु; कूडल-संगमदेव! नीनेनगोल्लिदनादरे एन्न होगळतेगे अड्डु बारा ॥ ४४ ॥

एते मदीयाः खलु मां प्रशंस्य सुवर्णशूले हि निचिक्षिपुर्माम् ।
तेषां प्रशंसा मम देहमाप्य गर्वादिमूलामसतां प्रवृत्तिम् ॥
उत्पादयामास भवत्प्रसादात् सैवासिधारात्मतया लुनाति ।
खिन्नोऽस्मि देव त्ववशोऽस्मि सोढुमातङ्कयित्वा जगतः प्रशंसाम् ॥

यदीच्छसि त्वं गुरुसंगमेश प्रभो भवद्भक्तिमिहाद्रियस्व ।

Those who praise me are hurting me with a golden trident. Worldly praise hurts me like a sharpedged knife by heightening my pride and prejudice. O Kudala Sangamadeva! I feel distressed owing to my inability to restrain myself under the influence of praise. I beg You to intervene and save me from the bondage of worldly praise.

भक्तः परित्यक्तस्थानमानापेक्षोऽपि प्रपञ्चे आकर्षणीयभोग्य-वस्तुभिः प्रतिक्षणं समाकृष्टो यथा न भवेत् तथा तस्य मनसि स्थैर्यं द्रढयितुं परशिव एव प्रतिक्षणं प्रार्थ्यतामित्याह——

बडपशु पङ्कदल्लि बिद्दोडे काल वडिवुदल्लदे बेरे गतियुण्टे? शिवशिव होदहे होदहेनय्य। निम्म मनदत्तलेन्न तेगेयय्य! पशुवानु; पशुपति नीनु! तुडुगुणियेन्दु यन्न हिडिदु बडियद मुन्न, ओडेय! निम्म बय्यदन्ते माडु कूडल सङ्गमदेव ॥ ४५ ॥

पंके निमग्नस्य पशोर्हि दृष्टा पादस्य घाताद्गतिरत्र नान्या ।
नष्टोऽस्मि शंभो गिरिशास्मि नष्टः उद्धृत्य मां त्वद्धृदये निधेहि ॥
पशुस्त्वहं त्वं च पशोरधीशस्ततो दयस्वात्मनि वत्सल त्वम् ।
यावच्च मां हिंस्र इति प्रतीत्या संगृह्य संहन्युरमी मनुष्याः ॥
तावत्प्रभो पश्य तथात्मनीनं यथा न निन्देयमहं भवन्तम् ।

I am a poor animal cought in the morass, I have no other goal than simply kicking helplessly. O Lord Kudala Sangama, I am almost drowned. Pray lift me out and allow me to dwell in Your heart. I am an animal and You are the protector of such animals. Hence I deserve Your mercy. Please consider me as your own before these people would strike at me thinking of me as a cruel animal, so that I may not abuse You, my Lord.

एवं सर्वदा भगवत्सेवामेव याचमानो भक्तः लौकिकव्यवहारान् निस्स्पृहतया निर्वहन् सर्वप्राणिषु दयावान् सर्वत्र शिवमेव पश्यन् स्वं सर्वेभ्योऽपि कनीयांसं, शिवभक्तांश्च ज्यायसो भावयन् विनीतो निवसति। भक्तस्यैतादृशं वर्तनं बसवार्यः स्वदृष्टांतेन कथयति। तद्यथा—

एनगिन्त किरियरिल्ल ; शिवभक्तरिगिंत हिरियरिल्ल. निम्म पादसाक्षि, एन्न मनसाक्षि. कूडलसंगमदेव एनगिदे दिव्य ॥ ४६ ॥

मत्तः कनीयान्न शिवस्य भक्ताज्ज्यायान्न चात्र प्रमितिस्त्वमेव।
तत्रैव मच्चित्तमवेहि मानं भवत्प्रसादो ह्ययमेव देव ॥

My Benefactor! There is none smaller than me. There is none greater than the devotees of You. I swear by Your worthy feet and with all my heart. This itself is my salvation.

भक्तः सर्वप्राणिनः आत्मीयतया प्रीणयन् सर्वत्र दयामेव आचरन् वर्तेत, तदैव सः शिवानुग्रहं लभेतेत्याह—

दयविल्लद धर्मवदावुदय्य? दयवे बेकु सकलप्राणिगळल्लि. दयवे धर्मद मूलवय्य! कूडलसंगय्यनन्तल्लदोल्लनय्य ॥ ४७ ॥

क एप धर्मो हि दयां विना स्यात्प्राणेष्वशेषेषु दयैव युक्ता।
मूलं हि धर्मस्य दयैव लोके दयाविहीनं त्यजतीह देवः ॥

There is no charity without kindness. Kindness in all living beings is just what is required from everybody. Kindness is the root of Dharma. Otherwise, Lord Kudala Sangama does not approve of one's attitude.

दयविरबेकु सकलप्राणिगळल्लि. स्वयविरबेकु सकलगुणगळल्लि. नयविरबेकु नुडिगडणदल्लि. इन्तीगुणविल्लदवर कण्डडे सोगसदय्य एनगे अखण्डेश्वर ॥ ४८ ॥

दया हि जीवेषु गुणे प्रियत्वं विनम्रता भावनिवेदने च।
संशोभते नित्यमखण्डदेव तया विहीनो नहि रोचते मे ॥

One must be kind to all creatures. One must be well acquainted with all good qalities. One must be pleasant in one's speech. Absence of these will not make a man worthy of Lord Akhandadeva's grace.

वसवार्यः स्वीयवर्तनमत्र हृदयंगमया रीत्या निवेदयति। तदीयमादर्शं लौकिकं जीवनं सर्वैरप्यध्यात्मसाधकैरवश्यं निरुह्यमेव। एवं वसन्नेव भक्तो भगवदनुग्रहं प्राप्नुयादित्याह––

न्यायनिष्ठुरि, दाक्षिण्यपरनु नानल्ल; लोकविरोधि शरण-नारिगञ्जुवनल्ल; कूडलसंगमदेवर राजतेजदल्लिप्पनागि ॥ ४९ ॥

न्यायैकनैष्ठुर्यपरोऽस्मि यावत्तावच्च दाक्षिण्यपरो न जातः।
लोकाद्विरुद्धः शरणो बिभेति कुतोऽपि नो संगमदेव! एषः॥
तवैव तेजोनिचये विलीनः जगच्च तेजोमयमेव पश्यति।

I live a righteous life. I am not subject to any obligations. The Sharana fears no one even if the whole world is against him. He lives under the protection of Lord Sangama and looks at the entire universe as Divine light itself.

लिङ्गदल्लि सम्यक्करु. लिङ्गदल्लि सदर्थरु. लिङ्गदल्लि सोम्मु-संबन्धवरित स्वामिभृत्यरेल्लरु! केळि निम्म बेडे; अञ्जदिरि. एनगे मर्त्यलोकद महागणङ्गळुण्टु. इदु कारण कूडलसङ्गमदेवर लोकव हिडिकोळ्ळि निमनिमगे ॥ ५० ॥

य एव लिंगस्य गिजार्थवेदिनः य एव लिंगहितचित्तवृत्तयः।
य एव लिंगांगसमत्ववेदिनः शृण्वन्तु ते सर्व इमे च भक्ताः॥

तानेव सर्वान् भवतो न याचे तस्माद्भवन्तो न भयं भजन्तु ।
भवन्ति मर्त्ये शिवयोगनम्राः महागणाख्याः शरणा ममेष्टाः ॥
भुञ्जन्तु सर्वे गुरुसंगमार्थं त्वदीयलोकं समदर्शनेन ।

You who are said to have realised Linga! The devotees who have secured contact with Linga! You need not be afraid of me as I won't beg any of you for anything. I have, in this mortal world, my own masters to look after me. Yoy may divide among yourselves this world itself belonging to my Lord Sangama.

बसवार्थः शिवानुग्रहपात्रस्य भक्तस्य सद्वर्तनमेवं निरूपयति। एतदेव हृदयशुद्धेर्मूलम्। अनेनैव देवः प्रसीदति। एतादृशमादर्शभूतं वर्तनं सर्वैस्साधकैर्नित्यं सावधानतया यद्याश्रियते तदा देवानुग्रहः संभवेदेवेत्याह—

कळवेड, कोलबेड, हुसिय नुडियलु वेड; मुनियबेड, अन्यरिगे असह्यपडवेड; तन्न बण्णिसवेड; इदिर हळियलु वेड; इदे अन्तरंगशुद्धि, इदे बहिरङ्गशुद्धि इदे नम्म कूडलसङ्गमदेवनोलिव परि ॥ ५० ॥

चैयं हिंसां नैव कुर्याः कदापि नैवासत्यं वाच्यमेवैकदापि।
मा कार्षीस्त्वं कोपमापद्यदि स्यान्माऽन्यान्दृष्ट्वाऽसह्यमेवेह कुर्यात् ॥

आत्मानंस्त्वं मा प्रशंसीः कदापि माऽन्येषां त्वं निन्दकश्चापि भूयाः।
एषैव शंभो बहिरङ्गशुद्धिस्तथैव चान्तःकरणे विशुद्धिः ॥
सैवेह शुद्धिर्गुरुसङ्गमार्य त्वत्प्रीणनार्थं विहिता बहुज्ञैः ।

Don't kill any being on earth; don't steel anything under any circumstance; don't lie; don't get angry; don't despise others; don't laud yourself; don't abuse to one's face. This is internal purity. This is external purity. This is the way to win the grace of Lord Sangama.

एवंगुणयुक्तत्वादेव भक्तोऽन्तर्बहिश्च दयामयस्सन् वैदिकैः निरूह्यमानं यज्ञपशुवधमपि न सहते । यज्ञे वध्यमानः पशुर्देहयागेनोत्तमां गतिं यद्यपि लभते। तथापि यज्ञे पशोर्वधं न सहते भक्तः। एतादृशेषु संदर्भेषु भक्तः कथं वर्तेतेत्ययमंश एवं निर्वर्ण्यते बसवार्येण। "न वा उवे तन्म्रियसे नरिष्यसि देवान् इदेपि पथिभिस्सुगेभिः। यत्र यन्ति सुकृतो नापि दुष्कृतः" इति श्रुतौ यज्ञे हतस्य पशो सद्गतिर्विधीयते। तदनुसारेण बसवार्यः तादृशः पशोः सङ्गमनाथानुग्रहं प्रापयितुं प्रार्थयते--

मातिन मातिङ्गे निन्न कोन्दहरेन्दु, एले होते ! अळु कण्ड्या. वेदवनोदिदवर मुन्दे अळु कण्ड्या. शास्त्रव केळिदवर मुन्दे अळु कण्ड्या. नीनत्तुदक्के तक्कुद माडुवनेम्म कूडलसंगमदेव ॥ ५१ ॥

उल्कावुक्तौ संहरंतीति मत्वा छाग त्वं चेदश्रु मुञ्चस्यभीक्ष्णम् ।
देवस्तुभ्यं रोदनार्हं फलं नु दद्यादेवेत्येवमेवेह विद्धि ॥
वेदाभ्यासं कुर्वते ये नु नित्यं तेषामग्रे रोदितुं संरभस्व ।
शास्त्रं ये वा शृण्वते नित्यमेव तेषामग्रे रोदितुं संरभस्व ॥

Even if the sacrifical animal whose life is to be ended with chants and oblations turns in prayer to God Sangama, I am sure that He will take the proper care of it. Hence it is better that the innocent animal should weep before the reciters of Veda, and the hearers of Shastras.

यज्ञे पशुवधो यद्यपि न पापकारी ; किन्तु उत्तमगतिप्रास्त्या हितकार्यैव । तथापि जीवितुकामस्य पशोर्देहत्यागस्तदानीं हिंसाजनक इति दृष्ट्या वचनकारैस्तस्य निन्दा विधीयते । तत्रापि ते पशोस्सद्गतये हृत्पूर्वकं प्रार्थयन्ते । तेषामियं समन्वयदृष्टिः शिवप्रपञ्चयोस्ता-दात्म्यस्याविरोधवत्तां स्पष्टयति । एकदा मेष एकः यज्ञार्थमानीतः स्वोदरपूरणार्थं तोरणस्थं चूताङ्कुरं भक्षयन्नासीत् । तं दृष्ट्वा बसवार्यः वध्यस्य पशोरविवेकमाहाराभिलाषं च निरीक्षमाणस्तस्मिन् स्वीयां अनुकम्पामेवमभिव्यनक्ति—

हव्यक्के तंद हरकेय कुरि तोरणक्के तंद तळिर मेयित्तु ;
कोन्दहरेम्बुदनरियदे बेन्दबोडल होरेयुत्तलिदे ! अन्दन्दे हुट्टित्तु,
अन्दन्दे होंदित्तु. कोंदवरुळिदरे कूडलसंगमदेव ॥ ५२ ॥

महार्थमानीत उरभ्र एषः अश्नाति चूताङ्कुरमेव तोरणे ।
न चैव जानाति पशुस्त्ववध्यतां शक्त्या यतेतैव स्वकुक्षिपूरणे ॥
आशा निवृत्ता उरणोऽपि नष्टः तद्घातकस्सोऽपि विनष्ट एव ।

The lamb, brought for sacrifice munches the mango sprouts of the festoon. It does not know that its death is inminent. What about the sacrificers! Do they survive atleast ? No. They will also be dead and gone.

भगवत्प्रार्थनायाः जन्मतो न कोऽप्यतङ्को विद्यते । भक्त्या भगवन्तमर्चयितुं सर्वेषामपि समानोऽवकाशो विद्यत एव । व्यासादयो महर्षयः ज्ञानप्राप्तेः पूर्वं यद्यपि हीनजातावेवोत्पन्ना आसन् । ज्ञानक्रियासमन्वयात्मिकायाः भक्तेरनुष्ठानात्सर्वे च पूज्या बभूवुः । अतस्सर्वैरपि भक्तिमार्ग आश्रयणीय इत्याह—

व्यास बोयितिय मग, मार्कण्डेय मातङ्गिय मग, मण्डोदरि कप्पेय मगळु. कुलवनरसदिरिं भो. कुलदिंद मुन्नेनादिरिं भो? साक्षादगस्त्य कब्बिल, दूर्वास मुच्चिग, कश्यप कम्मार, कौण्डिन्यनेंब ऋषि मूरुलोकवरियॆ नायिंद काणिं भो. कूडलसंगन वचनविन्तेन्दुदु "श्वपचनादरेनु शिवभक्तने कुलजनु" ॥ ५२ ॥

व्यासो वागुरिकासुतः प्लवसुताजातो मृकण्डोस्सुतः
तद्वद्राक्षससंविधानकुशलाङ्केक्यां तु मण्डोदरी ।

जातेत्थं सति वंशवृत्तपदवीसञ्चिन्तनाऽश्रेयसे
ह्येतज्जन्मपरिग्रहादपि पुरा जाताः क्व यूयं नराः? ॥
अगस्त्य उद्भूत इहैव कुंभात्
तक्षाऽथ दूर्वासमहर्षिरेव ।
मातङ्गजातस्त्वथ कश्यपोऽसौ
ख्यातस्त्वयस्कारकुले महात्मा ॥
कौण्डिन्यो मुनिरेव नापितकुले लेभे जनिं विश्रुतः
तस्माद्यः श्वपचो भवत्यवशतः स्यात्सः शिवे भक्तिमान् ॥

Vyasa was of a fisherman; Markandeya of a Matangi. Mandodari hailed from a frog. Agastya was a smith. Durvasa a carpenter, Kashypa an iron monger, Kaundilya a barber. A man's birth or occupation does not make him ignoble if he is a true Shivabhakta.

एवं भगवदर्चनया सर्वेऽपि महनीयकीर्तयो भवन्त्येव । अतो भक्तिमार्गे सर्वेषां समानावकाशा वर्तन्ते । अतः न कोऽप्ययोग्य इति परिगण्यते ; परंतु मनोनिग्रहाय साधकः सर्वदा भगवत्येव प्रार्थनां कुर्यादित्याह—

अन्दणवनेरिद् सोणगनंते कण्डोडे बिडदु मुन्निन स्वभाववनु. सुड्ड सुड्ड मनविदु विषयक्के हरिवुदु. मृड! निम्मननुदिन नेनेयलीयदु. एन्नोडेय देव! निम्म चरणव नेनेवन्ते करुणिसु. सेरगोड्डि बेड्डुवे ॥ ५४ ॥

आरोह्यापि कथं य एष भषको भावं नवं ग्राहितः
स्वं भावं न जहाति वीक्ष्य विषयं प्राग्जन्मसंपादितम् ।
तद्वन्मे मनसोऽन्यतः प्रसरणं दन्दह्यतां हे मृड
त्वां संस्मर्तुमपीह नो वितरति ह्यज्ञं मनो मेऽन्तरम् ॥
मत्स्वामिन् भवदीयपादयुगळं संस्मर्तुमाशाधि माम्
चेलान्तं हि वितत्य याचितुमुपक्रान्तोऽस्मि देव त्वयि ।

Like a dog, placed on a pedestal, my mind acts foolishly. It drags me towards the sensual pleasures and does not enable me to raise to the heights of spiritual surrender. My Lord, Sangamadeva ! I humbly beg of You. Kindly grant me Thy Grace and make me aspire to serve Your holy feet.

भक्तः स्वशरीररक्षणभारं देव एव यदि विनिक्षिपेत्तदैव तस्यानुग्रहं सः निरीक्षेतेत्याह--

कायद कळवळक्कञ्जि काययय्य एन्नेनु. जीवनोपायक्कञ्जि ईयय्य एन्नेनु. 'यद्भावं तद्भवति' एंबुदागि उरिबरलि सिरिबरलि बेकु बेडेन्ने. आनु निम्म हारेनु मानवर बेडेनु. आणे निम्माणे-यय्य कूडलसङ्गमदेवदेव ॥ ५५ ॥

देहस्य दुःखं प्रसमीक्ष्य भीतः रक्षेति देवं न कदापि याचे ।
शरीररक्षार्थमुपायमेकं अन्वेषयन्भीत इहैष भृत्यः ॥

देहीति देवं न कदापि याचे यद्भाव्यमेवेह तदस्तु नित्यम् ।
निन्दा च स्तोत्रं ह्यनुयातु भृत्यं तस्योभयं साधु भवेद्धि सत्यम् ॥
सुखं च दुःखं च न चैव याचे न वा निराकर्तुमपि प्रवृत्तः ।
यथा भवन्तं गुरुसङ्गमार्यं तथैव चान्यान्न कदापि याचे ॥

O Lord ! I do not beg You for any bodily comforts. I do not beg You atleast for my livelihood. What happens in the natural course will happen. Similarly, I am prepared to face whatever comes. I will not beg any body else. I surrender myself to You completely.

भक्तः सर्वदा यदि भगवदर्चनासक्तो भवेत् तदा जन्म-सार्थक्यमवश्यमधिगच्छत्येवेत्याह--

लेसेनिसिकोण्डु ऐदु दिन बदुकिदरेनु ? लेसेनिसिकोण्डु नाल्कु दिन बदुकिदरेनु ? लेसेनिसिकोण्डु मूरुदिन बदुकिदरेनु ? लेसेनिसिकोण्डु येरडु दिन बदुकिदरेनु ? लेसेनिसिकोण्डु ओंदुदिन बदुकिदरे सालदे ? ॥ ५७ ॥

दिनपञ्चकं वाथ चतुष्टयं वा दिनत्रयं वा दिवसद्वयं वा ।
सन्नित्यभिख्यां प्रतिपद्य जीवेत् स एव धन्यो भुवि मान्य एव ॥

जीवितं शिवभक्तानां वरं पञ्चदिनानि च ।
नाजकल्पसहस्रं तु भक्तिहीनं महेश्वरि ॥

भवद्भक्तः श्रीगुरुसङ्गमार्यं प्रमाणयन्तं शरणं विलोक्य ।
साधुस्वभावः पुरुषस्तु लोके शिवप्रियो ह्येकदिनं वसेत्तु ॥

It is said "Rather than live for a thousand Brahmakalpas without Shivabhakti, it is better to exist only for five days as a Shivabhakta" I say, why five days or four days or three or two ? If you live just for one day as a Shivabhakta, it is real living.

तथा प्रतिदिनं भगवदर्चनेन भक्तः कीदृशं ऐहिकमामुष्मिकं च फलं विन्दत इत्येतदाह--

वारेन्दरियॆ, दिनवेंदरियॆ, एनेन्दरियेनय्य. इरुळेन्दरियॆ हगलेन्दरियॆ. एनेन्दरियेनय्य. निम्मव पूजिसि एम्मव मरॆदॆ कूडलसङ्गमदेव ॥ ५६ ॥

न वारं दिनं वः न नक्तं दिवं वा
न जानेऽद्य किं वा न मे यन्ममेति ।
सुविस्मृत्य कायं समाधाय चित्तं
संमेतोऽस्मि योगं भवत्पादपद्मे ॥

Being solely engaged in worship, I make no distinction of time between morning and evening, or day and night. O Lord Sangamesha ! Being immersed in Your worship, I forgot myself completely.

एवं दंपती भगवदर्चनानिरतौ यदि भवेतां तदैव दांपत्यसुखं लभ्येत । एवं हृदये सामरस्यं यदि विधेत तदा ताराचन्द्रबला-दिकमपि न निरीक्ष्यमित्याह--

एम्मवरु वेसगोण्डरे शुभलग्नवेन्निरय्य ? राशिकूट ऋण-संबन्ध उण्टेन्दु हेळिरय्य ! चन्द्रबलताराबल उण्टेन्दु हेळिरय्य ! नाळिन दिनकिन्दिन दिन लेसेन्दु हेळिरय्य ? कूडलसङ्गमदेवन पूजिसिद फल निम्मदय्य ॥ ५९ ॥

अन्योन्यं यदि चित्त एकरसतां कन्यावरौ प्राप्नुतः ।
तल्लग्नं शुभमित्युदीरयत मा चान्यथा कथ्यताम् ॥
ताराचन्द्रबले तथा ऋणमुखाः कूटाश्च राश्यादयः ।
सन्तीति प्रतिपाद्यतां वरमयं घस्रः परस्माद्दिनात् ॥
संसाररचनायैवमुक्ते सति भवेद्ध्रुवम् ।
सङ्गमेशस्य पूजायाः फलमित्यभिधीयते ॥

If anybody would consult you for a moment which is suitable to the Divine worship, just tell them that the very moment of consultation would be auspicions as consisting of the suitableness of the planetary position like the power of moon, stars etc. If thc mind is prepared to think of Divine worship, that itself is an auspicious moment. Just tell them that

today would be better than tomorrow and you will get the benefit of Divinc worship.

स्वार्चनीये शिवलिङ्गे निविष्टचित्तः भक्तः अन्यविषयेच्छया किमिव विन्देत ? कामं क्रोधं लोभं मोहं च यदि सः स्वलिङ्ग एव प्रयुञ्जीत तदा नियतमेवानुगृह्येत। परन्तु मदमत्सरयोर्यद्यवकाशो दीयेत तदा तस्मिन् हृदयशुद्धिरेव न स्यात्। अतस्सद्वर्तनेनैव अन्तर्बहिश्च देवं सन्तोषयितुं प्रयतेत साधक इत्याह--

कामवेको लिङ्गप्रेमियेनिसुवंगे ? क्रोधवेको शरणवेद्यनेनिसुवंगे ? लोभवेको भक्तिलाभव बयसुवंगे ? मोहवेको प्रसादवेद्यनेनिसुवंगे ? मदमत्सरवुळ्ळवंगे हृदयशुद्धविन्नेल्लियदो ? हृदुळिगरादल्लिप्म कूडलसङ्गमदेव ॥ ५८ ॥

कामेन किं स्यादिह लिंगमिच्छतः क्रोधेन किं स्याच्छरणाभिकांक्षिणः।
लोभेन किं स्याद्गुरुभक्तिकांक्षिणो मोहेन किं स्याच्च प्रसादकांक्षिणः॥

चैतन्यशुद्धिर्मदमत्सरात्मसु निरीक्षितुं नार्हति सङ्गमेश।
सद्वर्तनेषु प्रयतेषु देवो ह्यातिष्ठतीति प्रथिता प्रतीतिः॥

If one desires Divine worship heartily where is any need for him to aspire for anything else? If one knows and recognises a Sharana, the surrendered one, where is any need for him to be angry? If one aspires for devotion, how can there be an occasion to be

greedy after anything else? If one knows how to transform the world as Divine Bliss how can there be any lust in him? But how can one attain the purity of heart if one entertains pride and prejudice? Hence God dwells only in the pure heart of the well-behaved persons.

एवं मदमत्सरौ विना सद्वर्तनेन प्रयते.भक्ते कोपस्याऽप्रसक्त्या अन्तर्बहिश्च शान्तिर्विकसेत् । तस्य स्थितिरत्रैवं वर्ण्यते--

कण्ड भक्तंगे कैमुगिवातने भक्त; मृदुवचनवे सकल-जपंगळय्य. मृदुवचनवे सकलतपंगळय्य. सदुविनयवे सदाशिवन ओलुमेयय्य. कूडलसंगय्यनन्तल्लदोल्लनय्य ॥ ५९ ॥

यं यं हि भक्तं त्ववलोकते तं तमेव सम्यक् प्रणमेद्य एषः ।
स एव भक्तः परिकीर्तितो बुधैर्जानाभि नान्यं सदृशं तु तस्य ॥

मृद्वेव वाक्यं सफलो जपस्स्यान्मृद्वेव वाक्यं सफलं तपस्स्यात् ।
सद्वर्तनं चैव शिवप्रसादः नो चेत्प्रसन्नो न भवेत्स देवः ॥

A devotee is one who offers obeisance to the devoted person whom he meets. He speaks to him respectfully and politely. Because, soft and kind speech is itself real meditation and penance. Modest behaviour is nothing but God's favour. God won't be pleased unless one is wellbehaved.

भक्तस्सर्वदा क्रूरेष्वपि मृदुरेव वर्तेत। कुसुमादपि मृदु स्यात्तस्य हृदयम्। अत एव तस्मिन् कोपस्य गन्धोऽपि नास्ति। कोपस्य दुष्परिणाममत्रैवं निर्दिशति बसवार्यः—

तनगे मुनिवरिगे ता मुनियलेकय्य? तनगादरेनु अन्यरिगदरेनु? तनुविन कोप तन्न हिरियतनद केडु; मनद कोप तन्न अरुहिन केडु. मनेयोळगण किच्चु मनेय सुट्टल्लदे नेरे मनेय सुडदु कूडलसङ्गमदेव ॥ ६० ॥

किं कुप्यसि त्वं कुपितोऽपि मानवे किं तत्फलं स्यात्तव किं परेषाम्?।
तनोश्च कोपः प्रविहन्ति मानं मनःप्रकोपः प्रविहन्ति शेमुषीम् ॥
दहेद्गृहस्थो गृहमेव दावः नान्यद्गृहं सन्दहतीह देव।

If others are angry with you, you should not give way to anger. Its effect is unbearable both for yourself and for others. External anger by way of using harsh words smashes one's greatness. Internal anger destroys one's own realised knowledge. The fire inside a house will burn the house itself and not the neighbouring one. Therefore avoid anger both internally and externally.

यः प्राणेषु निर्भयः धनकनकादिवस्तुषु निराशश्च वर्तते स एव भक्तो भवितुमर्हतीत्याह—

धनदल्लि निराशे प्राणदल्लि निर्भय इवावङ्गळवङ्कुवुदय्य? विधान तप्पि वन्दरे ओल्लेनेंबवरिल्ल; प्रमादवश वन्दरे हुसियेनेंववरिल्ल. निराशे निर्भय, कूडलसङ्गमदेव! नीनोल्दि शरणङ्गल्लदिल्ल ॥ ६१ ॥

प्राणेष्वभीर्निस्स्पृहता च वित्ते कस्मिंश्च वर्तेत वद त्वमेव? ।
निधिर्यदागच्छति दैवयोगान्नैकः प्रयुङ्क्ते हि निषेधवाक्यम् ॥
प्रमादतः प्राप्स्यति चेत्तदापि को वा वदेत्प्राप्त इहेति लोके? ।
गतोऽस्ति यस्मिन्वशतां भवान्हि तस्यैव भीतिस्पृहयोर्विना त्वम् ॥

Who has not possessed love for wealth? Who has no fear of life? If wealth comes by chance, no one will reject it. If it comes by mistake, no one will refuse to utter a lie about it. Disinterestedness and fearlessness are attained by the grace of God. But only a surrendered soul and none else can retain them for the good of the humanity-at-large.

एतादृशयोर्निर्भयनिस्स्पृहतयोः प्राप्त्या प्रीतो भक्तः देहावसानपर्यन्तं तत्स्थिरीकरणार्थं भगवत्प्रार्थनायामेव वर्तेतेत्याह—

चकोरंगे चन्द्रमन बेळगिन चिन्ते; अंबुजके भानुविन उदयद चिन्ते; भ्रमरंगे परिमळद बण्डुम्ब चिन्ते. एनगे कूडलसङ्गमदेवर नेनेवुदे चिंते ॥ ६२ ॥

चकोर इन्दोरुदयं निरीक्षते भानोः प्रकाशं च निरीक्षतेऽम्बुजम् ।
द्विरेफ इच्छेत्कुसुमस्य गन्धं ममास्ति चिंता गुरुसंगमेश्वरे ॥

The bird chakora aspires for the moon-shine. The lotus flower awaits the advent of sunrise. The bee goes after the scent of the flower. My sole aim is the meditation of Lord Sangama.

परमात्मनः स्थिरभक्तियोगलभ्यत्वमुपपादयति--

नादप्रिय शिवनेंबरु नादप्रिय शिवनल्लय्य. वेदप्रिय शिवनेंबरु वेदप्रिय शिवनल्लय्य. नादव माडिद रावणंगे अरेयायुष्यवायित्तु. वेदवनोदिद ब्रह्मन शिर होयित्तु. नादप्रियनू अल्ल वेदप्रियनू अल्ल ; भक्तिप्रिय कूडलसंगमदेव ॥ ६३ ॥

नादप्रियः शंभुरितीर्यते जनैर्न नादमात्रेण हि तुष्यते शिवः ।
वेदप्रियः शंभुरितीर्यते जनैर्न वेदमात्रेण हि तुष्यते शिवः ॥
अर्धायुरासीन्ननु नादकारी लङ्काधिराजो वत भक्तिहीनः ।
अभ्यस्य वेदं ननु पङ्कजासनः शिरोविहीनः समजायतैव ॥
तस्माच्छिवो नादपरोऽपि नैव न वेदमात्रप्रियता च तस्मिन् ।
भक्तिप्रियत्वं हि समेति देवे भक्तो भवेयं खलु सङ्गमार्ये ॥

Some say that Lord Siva will be pleased with one's musical skill. But He is not to be pleased with it. Some say that He will be

pleased with one's recital of Vedas. But, He is not to be pleased with this also. This is clearly indicated by the fates of Ravana and Brahma. Ravana, an expert in musical performance lost his long span of life. Brahma, in spite of being an expert in vedic recitation lost his fifth head. Hence, Shiva is neither nadapriya nor Vedapriya; but He is Bhaktipriya, pleased with one's devotional practice.

भक्त्या यो देवमर्चयति सोऽवश्यं देवानुग्रहं लभत एव। तत्रापि देवस्वरूपं विदित्वा अर्चनं कर्तव्यम्। नो चेत्सर्वमपि निरर्थकमेव संपद्येत। देवस्तावत् मूर्तामूर्तस्वरूपी वर्तते। तादृशो देवस्य प्रीत्यर्थं मूर्तरूपिणं गुरुं, अमूर्तस्वरूपं जङ्गमं च साधकः भक्त्या श्रद्धया च समर्चयेदित्याह—

एरेदरे नेनेयदु; मरेदरे बाडदु; हुरुळिल्ल हुरुळिल्ल लिङ्गार्चने. कूडलसंगमदेव! जंगमक्केरेदरे स्थावर नेनेयित्तु ॥६४॥

अभिषेकान्न लिंगस्य सार्द्रता वा क्वचिद्भवेत्।
न म्लानता विस्मृतेर्वा लिंगस्य परिदृश्यते॥
फलं नास्ति फलं नास्ति जंगमाराधनं विना।
किन्तु जंगमसंतृप्त्या लिंगमार्द्रं तथा मृदु॥
भवेत्संगमदेवेश इति निश्चितधीरहम्॥

Sthavaralinga, the image situated in temples does not become wet with water, poured over it nor does it fade by the absence of abhisheka. But if the Jangama linga (ever roaming about here and there for the awakening of the devotees) is worshipped, the Sthawara will become pleased. (Though Sharanas dedicate their life to the Istalinga, favoured by Guru, they do not disregard the Sthavaralinga, installed in temples for the lay people to worship). Those who are engaged in the worship of Sthavara or Istalinga should never forget to worship Jangamas, the disinterested and enlightened ones.

एवं लिंगार्चकास्सर्वेऽपि जंगमाराधका भवेयुरिति शरणा निरीक्षन्ते। जंगमाराधनं नाम निर्मलपरंज्योतिस्स्वरूपिणां महाचेतनानां प्रीणनमेव। तथैव सर्वेषां जीवानां हिताचरणमपि कार्यमेव। सर्वभूतहितानुष्ठानमपि शिवार्चनमेव संपद्यते। अनेन सर्वहिताचरणेन तदन्तर्यामी परमात्मा प्रीयत एव। एवं च सर्वजगत्प्रीणनार्थं साधकैस्समदृष्टिराचरणीयेत्याह—

मर्त्यलोकवेंबुदु कर्तारन कम्मटवय्य। इल्लि सल्लुवरु अल्लियू सल्लुवरय्य· इल्लि सल्लद्वरु अल्लियू सल्लरय्य कूडलसंगमदेव ॥ ६५ ॥

मर्त्यो हि लोकः परमेश्वरस्य लीलाविनोदाय विनिर्मितं गृहम् ।
अत्रैव योग्या य इहाद्य दृष्टास्तेऽमुत्र योग्याः खलु संगमार्य ॥
ये त्वत्र नार्हास्त्वभवन्मनुष्यास्ते तत्र नार्हा भवितुं समर्थाः ।

The earth is the testing ground of God. Those who are proved worthy here will be recognised in the other world even. Those who are considered as unworthy here will become unworthy there also.

एवं देवानुग्रहापेक्षिणस्सर्वेऽपि पुण्यं पापमपि स्वायत्तमिति भावयन्तः पुण्याचरणेनैव जन्मसार्थक्यं साधयेयुरित्याह--

पुण्यपापवेंबुवु तम्मिष्ट कण्डिरय्य ! अय्या एन्दडे स्वर्ग ; एलवो एन्दडे नरक· देवभक्त जय जय एम्ब नुडियोळगे कैलासवैदुदु कूडलसङ्गमदेव ॥ ६६ ॥

पुण्यं पापं यद्धि लोके प्रदृष्टं तत्तत्सर्वं चित्तसंकल्पजं हि ।
अयीति वाचा प्रवदेद्यदा नरस्तदैव तत्रैव हि नागलोकः ॥
रेशब्दसंबोधयितुर्जनस्य तदैव तत्रैव हि कालसूत्रम् ।
'भक्ताय तुभ्यं जय आविरस्तु' शब्देऽत्र कैलास इहास्ति देव ॥

Merit and sin are selfmade. If you speak sweetly and gently, it is heaven on earth. If you speak with contempt, it is hell on earth. If you say "O you devotee, may you attain

prosperity" you will realise the bliss of Kailasa even here, while you are alive.

देवलोकमर्त्यलोकवेंब सीमेयुळ्ळन्नक्क केवलशरणनागलरियें. सत्तु वेरेसिहेनेन्दरे कब्बिन तुदिय मेल्दन्ते कूडलसङ्गमदेव ॥ ६७॥

नरालयस्तु त्रिदशालयाद्धि विभिन्न इत्येव मतिस्तु यावत् ।
तावन्न चेच्छामि प्रपन्नभावं न वैतदर्थं पुनरेव जन्म ॥
मृत्वा पुनस्सङ्गमनं त्वयेति पुण्ड्राग्रभागाशनतुल्यमेव ।

So long as you think of Heaven and Earth as distinet and consider that Heaven should be reached after your departuıe from this mortal body, you can never attain Heaven. It is something like swallowing the chaff of sugar-cane. (Here Heaven means Kailasa)

इक्षोरन्तर एव रसो विद्यते। स एवास्वाद्यो विवेकिभिः। य इक्षुदण्डं वहिरेवास्वादयति सः रसं नानुभवति। तथैम मर्त्यलोकं देवलोकादन्यं जानाति सः; अत्र विराजमानं देवसौन्दर्यं नानुभवत्येव। एतमेवाशयं पुनर्विशदयन्नाह—

देवलोक मर्त्यलोकवेंबुदु बेरिल्ल काणिरो. सत्यव नुडिवुदे देवलोक; मिथ्यव नुडिवुदे मर्त्यलोक; आचारवे स्वर्ग; अनाचारवे नरक. कूडलसङ्गमदेव! इदके नीवे प्रमाण ॥ ६८॥

सत्योक्तिमेव त्रिदिवं वदन्ति मिथ्योक्तिमेव प्रवदन्ति मर्त्यम् ।
आचार एव त्रिदशालयः स्यादाचारलोपः खलु दुर्गतिर्हि ॥
इत्थं विचिन्त्येऽत्र भवन्त एव प्रमाणमित्यात्मविनिश्चयोऽसौ ।

Heaven and Hell do not exist elsewhere. Uttering truth is Heaven ; Uttering falsehood is Hell. Well behaviour is heaven and ill behaviour is hell. Lord Sangama! You are an authority in this matter.

अत एव सद्वर्तनवतस्सर्वानपि सत्कुलप्रसूतान् मनुते भक्तः । नो चेत्तस्मिन् भक्तिरेव न विलसेत् । सौशील्यमेव सद्भक्तेश्चिह्नं भूत्वा मानवानां सद्वंशजत्वमावेदयति । यः दुश्चरितः सः महतीमर्चनां निर्वहन्नपि भगवते न रोचेत । सज्जनो भूत्वा यः देवाय मज्जनमावहति स एव देवानुग्रहं लभेत । मानवः स्वीयं जीवनं समग्रतः परार्थं यदि विनियुञ्जीत तदैव तस्य योगक्षेमं देवो वहेत् । " क्षणमप्यवतिष्ठते श्वसन्यदि जंतुर्ननु लाभवानसौ " इति महाकविः काळिदासो वदति । मानवस्यैकक्षणावस्थानमपि भगवतो महानुग्रह एव । अत एव तादृशमवस्थानं परहिताय यः उपयुञ्जीत स एव कुलज इति शरणा भावयन्ति । अयमाशयो बसवार्येणैवमाविष्कृतः—

कोल्लुवने मादिग. होलस तिंबुवने होलेय ! कुलवेनो

अवन्दिर कुलवेनो ? सकलजीवात्मरिगे लेसने बयसुव कूडलसंगन शरणरे कुलजरु ॥ ६९ ॥

य एव जीवान्विनिहन्ति नित्यं स एव भाव्योऽन्त्यज इत्यजस्रम् ।
तथैव योऽश्नाति परान्नमेव स एव भाव्योऽन्त्यज इत्यजस्रम् ॥
तेषां कुलं नैव विचारणीयं यैरेव सर्वत्र हितं विचिन्त्यते ।
सर्वेषु जीवेषु हिताभिशंसकाः सङ्गार्यभक्ताः कुलजाः प्रकीर्तिताः ॥

The killer of living beings is Madiga (a low caste person), The eater of muck is Holeya of the similar type. Birth is not the criterion of one's recognition as reliable. He who wishes will for the humanity at large is held a nobly-born person- (Hence anybody with a large heart and a noble mind may secure God's favour and continue his religious worship for the good of himself and his neighbours. One who is born selfish and continues to be selfish is held a man of low caste in the view of Sharanas. This deserves to be well realised by the young men and women who have come to the mortal body for a temporary stay. Unless and untill the equanimity of mind is retained and practised suitably in the day-to-day activities, one cannot prosper in spite of much worship.)

ब्राह्मणा एव भक्ता भवेयुरित्याशयो न रोचते शरणेभ्यः। यतः क्षत्रियवैश्यशूद्रेष्वपि अनेके भक्ताः ब्रह्मज्ञानसंपन्नास्सर्वेहृदयेष्वपि समदृष्ट्या विलसन्तं महादेवं पुरस्कर्तुं प्रभवन्ति । अयमंशः सोदाहरणं निरूप्यतेऽत्र—

शेट्टि एम्बेने सिरियाळन? मडिवाळनेंबेने माचय्यन? डोहरनेंबेने कक्कय्यन? मादारनेंबेने चन्नय्यन? आनु हारुव-नेन्दरे संगय्य नगुवनय्य ॥ ७० ॥

सद्भक्तवर्यः सिरियाळनामा वैश्यो विभाव्येत किमु प्रजाभिः ।
तथैव माचय्य इहैष भक्तः किं कथ्यते धावक इत्यभिख्यया ॥
तथैव कक्कय्य इति प्रसिद्धः किमुच्यते डोहर एष भक्तः ।
चन्नय्यनामा शिवभक्तवर्यो मादार इत्येव किमुच्यते बुधैः ॥
अहं यदि ब्राह्मणमित्यवैमि मां तदा हसत्येष हि संगमार्यः ।

Can I call Siriyala a vaisya by birth in spite of his being engaged in business? Can I call Machayya a washerman by looking at his work? Can I call Kakkayya a chandala owing to his birth in that family? Can I call Channaiah a scavenger owing to his profession? These are all true devotees of Siva. If I disregard them as of inferior birth and regard me as Brahmin of superior birth, Lord Sangayya will laugh at me.

एवं बसवार्यः स्वदृष्टांतेन सर्वात्मभावस्य महत्त्वं प्रतिपादयति । सर्वत्र विद्यमानां भगवद्विभूतिं यः पुरस्करोति स एव भगवदनुभवमधिगच्छति । विभिन्नस्वभावैर्जनैर्मिळित्वा व्यवहरंतोऽपि मानवाः परस्परं भावयंत एव श्रेयोऽभ्युदयौ प्राप्नुयुरिति शरणानामाशयः । तदानीमपि साधकस्समधिगतहृदयनैर्मल्यः अन्तः ब्रह्मचिंतायामेव वर्तमानः तद्विरुद्धैर्जनैः कदाचित् सहभोजनादिकं कुर्वन् प्रापञ्चिकवेषभूषणादिकमपि यद्युपयुञ्जीत तदापि सः क्रियाभ्रष्टो न भवतीति शरणा अभिप्रयन्ति । सार्वजनिकभोजनेन कालोचितभूषणेन च साधकस्य भक्तिर्न विनश्यति यदि तस्यांतरंगे शिवयोगः स्थिरतया विलसेदित्याह--

उम्बल्लि उडुवल्लि क्रियेयळियितेम्बरु· कोम्बल्लि कोडुवल्लि कुलवनरसुवरु· एन्तय्य अवर भक्तरेम्बे? एन्तय्य अवर युक्तरेम्बे? कूडलसंगमदेव! केळय्य? होलति शुद्धनीर मिन्दन्तायित्तय्य ॥ ७१ ॥

अन्यत्र भुक्त्वा परिधाय वस्त्रं क्रिया विनष्टेति विभाव्यते जनैः ।
अन्येन किञ्चित्परिगृह्यते यदा तस्मै च किञ्चित्परिदीयते यदा ॥
तदा जनश्चिन्तयतीह वंशं प्रवर्तते ह्यत्र विचारशून्यः ।
कथं विभाव्यन्त इमे च भक्ताः कथं विभाव्यन्त इमे च युक्ताः ॥
वेश्यांगनास्नानसदृग्भवेत्तत् तदेतदाश्रवय सङ्गमेश ।

People say that their worth is tampered during to their interdining and dressing suitable

to the world. They indulge in discussing about one's birth during their worldly transactions like giving and taking. Can such people be considered as real devotees. Can one's worth be judged by one's family ties ? Can they be deemed as being harmoneously united with the Divine, Light, lying hidden in their heart. If a lowborn woman bathes in pure water, it does not remove the purity of the water ; on the other hand, she gets purified. Similarly, Bhakta's coming into contact with the ignoble persons does not tamper his worth in any way but makes others change their attitude.

तथा च साधकोऽन्तर्दृढनिष्ठश्चेत् वहिर्यत्र कुत्रापि भुञ्जानो येन केनापि भूषणेनालङ्कृतोऽपि स्वीयां निष्ठामपरित्यजन् अन्यानपि तादृश्यामेव निष्ठायां स्थिरयत्येवेति शरणा विश्वसन्ति । एवं च व्यावहारिकाः परस्परमेळनेन न कदापि विनश्येयुः किन्तु सर्वाङ्गीणां वृद्धिमधिगच्छेयुरेव । इतरैर्मेळनेनैव एकस्य वंशः कळङ्कित इति न केनापि भाव्यम् । अयमाशयो वर्धिष्णुभिस्सर्वैरपि सदा स्मर्तव्यः । मानवसामान्यस्यापि देहोत्पत्तौ न कोऽपि विशेषोऽस्ति ; परन्तु यः स्वान्तस्थं लिङ्गप्रकाशं जानाति स एवकुलजो भवेदित्याह—

होलेगण्डल्लदे पिण्डद नेलेगाश्रयविल्ल. जलबिंदुविन व्यवहार ओंदे. आशेयामिषरोष हरुषविषयादिगळेल्ल ओंदे.

1923

एननोदि एन केळि एनु फल? कुलजनेंबुदक्कावुदु दृष्ट? कासि कम्मारनाद. बीसि मडिवाळनाद, हासनिक्कि सालिगनाद. वेदव-नोदि हारुवनाद. कर्णदल्लि जनिसिदवरुण्टे जगदोळगे? तद्कारण, कूडलसङ्गमदेव! लिङ्गस्थलवनरिदवने कुलजनु ॥ ७२ ॥

रजो विना बिन्दुसमागमो न जलस्य बिन्दोश्च समानपातः ।
आशामिषाद्या विषयास्ससमाना श्रुत्वा पठित्वा फलमेव किं स्यात् ॥

सप्तधातुसमं पिण्डं समयोनिसमुद्भवम् ।
आत्मजीवसमुत्पन्नं वर्णानां किं प्रयोजनम् ॥

अयः प्रताप्य स्वयमेव जातोऽयस्कारनामा रजकश्च धावनात् ।
तन्तुं वयित्वाऽथ कुविन्दनामा वेदं पठित्वा द्विज एक आसीत् ॥

कर्णेऽभिजानः क इहास्ति लोके योनेर्हि जाता इति सिद्धमेतत् ।
य एव देहे सुविराजमानं लिङ्गं विजानाति स एव धन्यः ॥

Every birth is due to the contact of semen and overy. Every embryo develops by the combination of the seven ingredients. Where is any need of much reading and hearing if one has to understand the uniformity of human birth. Every one is born equal having the same passions and feelings. They continue to exist in spite of the people washing their body with water. Similarly, these feelings exist in all embodied persons equally. In spite of such

uniformity of birth, differences later arrive owing to the varieties of their occupations. When that is the case, how can anybody recognise the superiority or inferiority of birth? Real worth of a person consists in one's realisation of the Internal Light by the constant practice of devotion. One became a black-smith by making the iron hot. One became a washerman by spreading the clothes to get dry. One became a weaver by extending the threads lengthwise in the loom. One became a Brahmin by the recital of Vedas. All these are equally born and nobody has come out of the ears.

भक्ताग्रगण्यो बसवार्यः भगवत्येव निमग्नचित्तः स्वीयं समदृष्टिप्रकारमेवं निरूपयति--

देवदेव ! बिन्नपवनवधारु· विप्र मोदलु अन्त्यज कडेयागि शिवभक्तरादवरनेल्लरनोन्दे एम्बे· हारुव मोदलागि श्वपच कडेयागि भवियादवरनोन्दे एंबे· हीगेन्दु नंबुवुदेन्न मनवु· ई नुडिद नुडियोळगे एळ्ळमोनेयष्टु सन्देहवुळ्ळरे हलुदोरे मूग कोय्यि कूडलसंगमदेव ॥ ७३ ॥

देव त्वमाकर्णय मद्विधानं विप्रादिशूद्रांतसमस्तवर्णाः ।
शिवैकनिष्ठा यदि भक्तिमन्तः सर्वे समाना इति भाव्यते मया ॥

वर्णा द्विजाद्याः श्वपचान्तिमाश्च सर्वे च मोहाद्भविनः स्मृतास्ते ।
एषैव मे मानसभावना हि यद्यत्र लेशो विशयोऽस्ति तावत् ॥
तदैव शंभो गुरुसंगमार्य मय्यस्तु ते निग्रहरोषपाशः ।

O Lord, Kudala Sangamesha! From Brahmin to Shudra, I consider every devotee of Siva as equal. I consider the king down to the scavenger who practise devotion to Siva as equal. If You find me untrue to this statement, You may punish me as you like.

सर्वजीविभ्यः प्राप्यमेवार्थं प्रदातुं देवः जाग्रदपि जनाः अविवेकेन भूरि इच्छन्तः स्वीयं पावनं जीवनं व्यर्थयन्तीत्याह——

हाविन बाय कप्पे हसिदु हारुव नोणक्के आसे माडुवंते शूलवनेरुव कळ्ळनु हालुतुप्पव कुडिदु मेलेसुकाल बदुकुवनो? केडुवोडलनेच्चि कडुहुसियने हुसिदु ओडल होरेवर कूडल-संगमदेवनोल्ल ॥ ७४ ॥

यथा च भेकः पवनाशनस्य मुखे विलग्नः सरघां समाक्षिपेत् ।
तथैव मृत्योर्मुखसक्त एषो जीवस्समासज्जति भोगलेशे ॥
शूलं समारोहति यश्च चोरः सर्पिः पयः प्राश्य बुभुक्षयैव ।
जीवेत्कियन्तं समयं स भूयः आचक्ष्व मह्यं शरणार्थिने त्वम् ॥
विनश्वरं देहमिहावलंब्य मिथ्याप्रयोगं विनियुज्य देही ।
पुष्णाति चेत्स्वोदरमेव नित्यं तं संगमार्यो न हि विश्वसेद्ध्रुवम् ॥

Like a frog in the serpants' mouth which wishes to catch the fly, like the murderer in the deathcell who drinks milk and ghee with a view to satisfy his hunger, People who pamper the gross body and utter lies for the sake of profit are not liked by God Sangamesha.

भगवदर्चननिरता अपि साधकास्त्रिकरणशुद्धया अर्चनां न निर्वहन्ति । तदीयं वर्तनमत्र निरूप्यते—

कल्लनागर कण्डरे हालनेरे एम्बरु. दिटद नागर कण्डरे कोल्लेम्बरय्य ! उम्ब जङ्गम बन्दरे नडे एम्बरु. उण्णद लिङ्गक्के बोनव हिडि एम्बरय्य ! कूडलसङ्गन शरणर कण्डु उदासीनव माडिदरे कल्लु तागिद मिट्टियन्तप्परय्य ॥ ७५ ॥

दृश्येत यद्यश्ममयः सरीसृपः सर्वैश्च लोके पयसाभिषिच्यते ।
सत्यस्तु नागो यदि दृश्यते तदा निहन्यतामित्यनुजानते जनाः ॥
भोक्तुं समर्थश्चरजङ्गमो यदा समागतश्चेद्विनिवर्त्यते तदा ।
अनश्नतेऽस्मै शिवलिंगमूर्तये भक्ष्यं तु भक्त्यैव समर्पयन्ति ॥
शरणांश्च दृष्ट्वा तव संगमार्य य एव सेवां न समर्पयेयुः ।
तदाश्मसंघट्टितलोष्टतुल्या भवन्ति जानन्तु भवन्त एव ॥

People pour milk on a stone serpent ; but they kiil the living serpent. The so-called devotees dismiss the real Jangama who comes for

alms; but offer food to the Linga installed in temples. People who thus illtreat Sharanas will only come to grief in their walks of life.

भगवदर्चनतत्परोऽविवेकेन महापातकान्याचरितवानपि मनः- पूर्वकं यद्यर्चनामनुतिष्ठति तदा पातकमपि विनश्यतीत्याह—

एलवो एलवो पापकर्मव माडिदवने! एलवो एलवो ब्रह्म- हत्यव माडिदवने! ओम्मे शरणेन्नेलवो. ओम्मे शरणेन्दरे पापकर्म ओडुवुवु. सर्वप्रायश्चित्तक्के होन्न पर्वतङ्गळैद्वु. ओर्वङ्गे शरणेन्नु कूडलसंगमदेवङ्गे ॥ ७६ ॥

अयि मानव पापकर्मकारिन् अयि मानव ब्रह्महत्यकारिन् ।
यद्येकदा त्वं शरणेति वक्ष्यसि तदैव पापं निखिलं विनश्यति ॥
एकं हि देवं गुरुसंगमार्यं शरण्यभावेन समाश्रयस्व ।
नो चेत्त्वदीयं गुरु पापजातं स्वर्णाद्रिदानादपि नैव नश्येत् ॥

O evil-doer! O murderer! Utter the word Sharana once and surrender yourself to Lord Sangama. Your sin will vanish completely. Your crime will have been expiated. Even if you pay much wealth by way of expiation, you cannot come to the expectation. Instead of all this, you surrender yourself to God. You will get complete relief.

भक्तिशून्यैः कृतामर्चनां न स्वीकरोति देव इत्यत्र निदर्शनान्याह—

आडिदरेनो, हाडिदरेनो, ओदिदरेनो, त्रिविधदसोह-
विल्लदन्नक्क? आडदे नविलु? हाडदे तन्ति? ओददे गिळि?
भक्तियिल्लदवरनोल्ल कूडलसंगमदेव ॥ ७७ ॥

त्रिधा व्यवस्थापितदास्यभावं विहाय किं नर्तनतोऽथ गीतात् ।
संपाठनाद्वा भविता फलित्वं त्वमेव संश्रावय संगमेश ॥
बर्हो न नृत्यति न गायति किन्नु तन्त्री, रामेति किं पठति नो शुक
एष तिर्यक् ।
भक्तिं विनैव परिनर्तनगानपाठेष्वासक्तमात्रमनुमन्यत एव नेशः ॥

What is the good of playing, of singing or of reading if you have not dedicated yourself for the service of Guru, Linga and Jangama? Does not the peacock play? Does not the string give music? Does not the parrot read? God does not approve of the devotee who has not entertained the hearty and practical devotion.

अर्चकः देवप्रसादेन सर्वमपि अभीष्टं प्राप्नोति । "शिवानन्दं समासाद्य को वान्यमुपतिष्ठते? । गंगामृतं परित्यज्य कः कांक्षेन्मृगतृष्णिकाम्? ॥ तस्मात्सर्वप्रयत्नेन शङ्करं शरणं गतः । तदनन्तसुखं प्राप्य मोदते नान्यचिन्तया ॥" इति श्रीरेणुका-

चार्यैरगस्त्यमहर्षये पुरोपदिष्टम् । तद्वत् बसवार्योऽपि शिवप्रसाद-महत्त्वमत्रैवं कथयति--

नीनोलिदरे कोरडु कोनरुवुदय्य ! नीनोलिदरे बरडु हयनहुदय्य ! नीनोलिदरे सकलपडिपदार्थ इदिरलिर्पवु, कूडलसंगमदेव ॥ ७८ ॥

त्वयि प्रसन्ने सति काष्ठमेतदुज्जंभते पल्लवितस्वरूपम् ।
वशापि वाहाऽचिरमेव सूते किशोरमित्येव तु सिद्धमेतत् ।
तवाप्रसादाद्भविताऽमृतं विषं विषं प्रसादाद्भविताऽमृतं नु ।
त्वयि प्रसन्ने सकलाः पुमर्थाः समापतेयुर्गुरुसंगमार्य ॥

O Lord Sangama ! When You bestow Your grace, a dry wood puts out sprouts ; a useless hack becomes a stallieon ; poion becomes nectar and all facilities will easily be available.

भगवदर्चनपरास्साधकाः स्वयं वीरव्रतिनो भक्तांश्च मन्यमाना अपि भक्तिमार्गमेव न जानन्तीत्याह--

वीर व्रति भक्त एन्दु होगळिकोंबिरि केळिरय्य ? वीरनादरे वैरिगळु मेच्चबेकु. व्रतियादरे अङ्गनेयरु मेच्चबेकु. भक्तनादरे जङ्गम मेच्चबेकु. ई नुडियोळगे तन्न बगेयिरे बेडिद पदवियनीव कूडलसंगमदेव ॥ ७९ ॥

वीरा वयं सुव्रतिनो वयं हि भक्ता वयं चेति भवद्भिरीर्यते ।
पार्श्वस्थजीवाः शृणुतात्र वक्ष्ये सञ्चिन्त्यतामत्र भवद्भिरार्यैः ॥

वीरो यदि स्यादरिभिः प्रशस्तिं, व्रती यदि स्याद्वनिताप्रशस्तिम् ।
भक्तो यदि स्याच्चरमूर्तिशंसां लभेत, नो चेत्कथमुक्तरूपाः ॥
वचस्यमुष्मिन्यदि वर्तनैक्यं तदैव चाभीप्सितदेशलाभः ।
अतो भवद्भिर्द्विषतां प्रशस्यैः स्थतव्यमग्रे ललनाप्रशस्यैः ॥
तथैव मूर्तेश्चरजंगमस्य प्रशस्तिभाग्भिर्भवितव्यमेव ।

No one can boast oneself as a hero, an ascetic or a devotee. If one should be a hero, it must be proved by his enemies. If one should be an ascetic, it must be proved by women. If one should be a devotee, it must be proved by a Jangama. Only to such persons will God be pleased to grant whatever they want.

एवं च भक्तिमार्गः चरजंगमानां तुष्टये यदि स्यात्तदैव भक्तः शिवानुग्रहं लभेतेत्याह—

अंगदिच्छेगे मद्यमांसव तिम्बरु. कण्गळिच्छेगे परवधुव नेनेवरु. लिंगलाच्छनधारियादल्लि फलवेनु ? लिंगपथव तप्पि नडेवरु जंगममुखदिन्दे निन्दे बन्दरे कोण्ड मारिंगे होहुदु तप्पदु कूडलसंगमदेव ॥ ८० ॥

देहस्य पुष्टिं विदधातुकामाः भुञ्जन्ति मांसं मधु चैव जीवाः ।
दृगिच्छया ह्यन्यवधूं स्मरेयुरेवं स्थितानां हृदि नैव देवः ॥

एतादृशां लाच्छनधारणात्किम् लिंगस्य वा धारणतश्च किं स्यात् !
लिंगस्य मार्गः परिहीयते यदा विनिन्द्यते जंगमपुंगवैस्तदा ॥
संपूज्य काळीं तदुपान्तदेशं व्रजामि नैवेति वचो मृषैव ।
अतो विहीनः क्रियया जनोऽयं पश्चात्तदेनः परिहर्तुमिच्छति ॥

To the body's craving, people eat and drink flesh and wine. For the eye's craving, they look for others' women. What is the good of wearing Linga by such men as they lack decent behaviour ? People, engaged in the worship of Linga should conduct themselves in such a way as they would not get any censure from the Jangamas. A Jangama's curse will send them to hell. A worshipper of Kali (Mari) should naturally conduct himself politely to be liked by the spirit lying behind. Hence, the worshipper of Linga should try to please Jangama, who constitutes the soul of Linga.

एवं जंगमाहितचित्तवृत्तिस्साधकः शिवलिंगं भक्त्या नियतमेव यद्यर्चयेत्तदा श्रेयः प्राप्नुयादित्याह—

अन्दु इन्दु मत्तोन्देनबेड. दिनविन्दे शिवशरणेम्बवंगे. दिनविन्दे शिवशरणेम्बवंगे. दिनविन्दे हरशरणेम्बवंगे. दिनविन्दे कूडलसंगन माणदे नेनेवंगे ॥ ८१ ॥

तदानीमिदानीं परश्वोऽस्तु कार्यं इतीमं वचोजातमद्यैव जह्याः ।
शिवे भक्तिभावं भजत्यद्य यो वाऽद्यमेवास्तु कालस्य कालो हि देव ॥

Don't say that you will carry on worship this day, that day or another day. To the devotee who has surrendered himself to Siva, every day is auspicious for the worship.

सावु तडविल्ल. नरक दूरविल्ल· देहदिच्छेगे हरिदु केम्मने केडबेड. दुर्विषयव बिडु बेग· गुरुपदव नम्बु. नम्म चेन्नरामनल्लि नीनु सुखियप्पे ॥ ८२ ॥

मृतेर्विलम्बो नरकश्च दूरे न विद्यतेऽथापि शरीरहेतोः ।
किं क्लिश्यसे दुर्विषयोपभोगादन्ते विनाशो नियतस्तवैव ॥
ममत्वमोहं त्यज शीघ्रमेव भजस्व नित्यं गुरुपादयुग्मम् ।
एवं यदि स्यास्त्वमिहैव युक्तः सुखी खलु श्रीगुरुचेन्नरामे ॥

Death is not delayed. Hell is not distant. Don't ruin yourself by indulging in carnal pleasures. Forsake evil ways. Trust in the Guru's revered feet. You will find happiness in God Channarama.

निर्मलहृदयानां साधकानां तु देह एव देवालय इति शरणैः परिगण्यते । देवालयमन्यं गन्तुं सद्भक्तस्य अवकाशो नास्तीति ते स्पष्टं वदन्ति । तद्यथा—

उळ्ळवरु शिवालय माड्डवरु· नानेन माड्डुवे ? बडवनय्य. एन्न काले कम्ब. देहवे देगुल· शिरवे होन्नकळशवय्य. कूडल-संगमदेव ! केळय्य· स्थावरक्कळिवुण्टु जंगमक्कळिविल्ल ॥ ८३ ॥

संपद्युतैरत्र शिवालयादिर्विरच्यते चेत्किमहं करोमि ।
अकिञ्चनोऽहं शृणु संगमार्य मदीयदेहोऽत्र शिवालयः स्यात् ॥
स्तम्भौ भवेतां तु मदीयपादौ सुवर्णशृंगं तु शिरो मदीयम् ।
संस्थापितं नश्यति कालयोगात् न चैव नाशश्चरजंगमस्य ॥

The wealthy persons will build a temple; but I am too poor to build one. O God Sangama! My body forms a temple. My feet are pillars; my heart is the altar, and my head is the golden kalasa. On the altar resides my Lord who is held as Jangama, the Allround Indestruc tible Light. The temple image may decay in the course of time but the Jangama residing in my heart will remain eternal.

एवं शरणानामभिप्राये साधकः प्राणभावनया वामहस्ते स्वीयमिष्टलिंगं समर्चयन् अन्तस्थप्राणस्य करपीठस्थेष्टलिंगस्य चैकरूप्यमनुभवन् स्वीयां प्राणकलां श्रीगंध इव सर्वव्यापकत्वात् चरजंगममिति भावयति । इयं च जंगमाभिधा चित्कला अविनाशस्वरूपा वर्तत इति साधकः निरंतरं शिवलिंगार्चनेन विजानाति । अयं च संपूर्णतया स्वानुभवगोचर एव विषयः ।

इममनुभवमधिगन्तुमेव अङ्गुष्ठपरिमितं शिवलिंगं प्राणरूपतया अर्चनीयमिति शरणा अपेक्षन्ते। इदमेव लिंगं सर्वानिष्टपरिहारकत्वात् भक्तेष्टप्रदायकत्वाच्च इष्टलिंगमित्यभिधीयते। एतदिष्टलिंगानुभवाधिगमायैव देहोऽयं समागतः। लिंगप्रकाशकत्वादेव देहः पवित्र इति भाव्यते। परंतु तादृक् प्रकाशः अर्चनया अनुभवितव्यः साधकैः। एतदनुभवाऽभावे देहोऽयं मलमांसभाण्डो भूत्वा मृतप्राणिनोऽपि लघुर्भवेदित्याह--

व्याधनोन्दु मोलन तंदरे सलुव हागक्के बिलिवरय्य. नेलनाळ्दन हेणनेन्दरे ओंदडकेगे कोम्बवरिल्ल! नोडय्य मोलनिंद कडु कष्ट नरन बाळुवे. सले नम्बो कूडलसंगमदेवन ॥ ८४ ॥

शशं प्रहृत्यानयतीह लुब्धस्तस्यास्ति हर्ता पणदानतश्च ।
राज्ञश्शवस्स्याद्यदि पण्यवीथ्यां क्रेतापि न स्यात्क्रमुकार्पणेन ॥
शवान्निकृष्टं नरजन्म लोके भजस्व तस्माद्गुरुसंगमार्यम् ।

If a huntsman brings a hare, it will be bought for price. If a king is dead, nobody will buy the body even for an arecanut. It is worse than the hare's. Therefore, find solace in God Sangamesha, residing hidden in your body, while you are alive. Who pays the body after your departure?

एवं च भक्तः स्वीयं प्राणलिङ्गं बहिरर्चनायानुसन्धानाय च गुरोस्सकाशात् अधिगम्य तदेव स्वेष्टदैवतं स्वप्राणमिति भावयित्वा

निरन्तरमभ्यर्च्य च स्वप्राणे सामरस्यमनुभवन् कामिनीकाञ्चन-व्यामोहं परित्यज्य निर्लिप्तजीवनेन निरञ्जनजङ्गमो भवतीति शरणा अभिप्रयन्ति । एवं सर्वेऽपि तात्त्विकया दृष्ट्या जंगमा भवितु-मर्हन्ति । यस्य आशाभिमानौ हृदिस्थे परमेश्वर एव सङ्क्रान्तौ सः सदाशो भूत्वा सद्वस्तुरूपतया परिणमते । सद्वस्त्वेव जंगम इत्युच्यते । सर्वव्यापकं निर्लिप्तं दिव्यं ज्योतिरेव जंगम इत्युच्यते । लोकेषु स्थित्वाऽपि लोकधर्मातिक्रान्तं परंज्योतिरेव जंगमपदार्थ इति अनुभविनो वदन्ति । उत्पत्तिविनाशरहितं सनातनं तत्त्वमेव जंगम इति शरणैर्भाव्यते । प्राणभावनया देवार्चनेन सर्वेऽपि साधकाः एवं जंगमा भवन्त्येव । एवं ये जंगमा न भवन्ति ते जननमरण-रूपसंसारचक्रे भ्रममाणा वर्तन्ते । हृदये ये विश्वसन्ति ते सर्वे सद्वर्तनेन सदनुभवं लब्ध्वा जंगमा भवेयुः । येऽन्तः प्रवेष्टुं न पारयन्ति ते बहिरर्चन एव मग्नाः ख्यातिलाभानेव अपेक्षमाणाः लोकमर्यादामनुसृत्य विहारार्थं देवालयं गच्छन्ति । ते देवालये देवस्याग्रे स्थित्वा किं चिन्तयंति ? तदेवाह—

माडि नीडि लिंगव पूजिसिहेवेम्बवरु नीवेल्ल केळि. हागद केरहव होरगे कळेदु देगुलक्के होगि नमस्कारव माडुवनंते तन्न केरहिन ध्यानवल्लदे देवर ध्यानविल्ल. धनवनिरिसदिरा इरिसिदरे भव बप्पुदु तप्पदु. कूडलसंगन शरणरिगे धनव सविसले बेकु ॥ ८५ ॥

लिङ्गाभिषेकार्चनमग्नमानसाः सर्वे च शृण्वन्तु मदीयवाक्यम् ।
बहिर्विसृज्य स्वपदोरुपानहौ देवालयं प्राप्य नमस्करोति ॥
स आत्मनः पादुकयोर्निरन्तरं ध्याने वशो ध्यायति न प्रभुं स्वम् ।
तस्माच्च वित्तं न निधत्त मानवाः निधीयते तर्हि भवोऽनिवार्यः ॥
वित्तं च संपादितमेव सर्वं सङ्गार्थभक्तेषु समर्पणीयम् ।

Don't be proud of having worshipped Linga in various ways in order to please the world. When such a worshipper leaves his sandles outside and goes into the temple for worship, it is natural that he might be thinking of his sandles while looking at God in the midst of visitors. It is only when you cease to think of wealth and other worldly possessions, that you can be truly devoted to God.

धनकनकाद्यभिमानवन्तः परवेदनां ज्ञातुं परिहर्तुं च नेच्छन्ति । "यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥" इत्यनुभविनः श्रीमतां संपद्विपाक्रांतानां दुर्ग्राह्यत्वं प्रतिपादयन्ति । एवमेव शरणाः श्रीमतां दुष्प्रसह्यतामत्र स्पष्टयन्ति—

हावु तिंदवर नुडिसबहुदु. गर होडेदवर नुडिसबहुदु. सिरिगर होडेदवर नुडिसलु बारदु नोडय्य. बडतनवेम्ब मन्त्रवादि होगलु ओडने नुडिवरु, कूडलसंगमदेव ॥ ८६ ॥

It is possible to conduct ourselves peacefully in the company of a snake-bitten or a poison-ridden person. But the person poisoned by wealth can never express himself freely in the presence of anybody execpt a poor beggar acting as a snake-charmer, before whom he has no other way of opening his month with a view to get rid of him.

एवं च विषग्रस्तास्सर्वेऽपि यथाकथंचिदात्मीयता इतरैर्व्यवहरन्ति । परंतु संपद्विषाक्रान्तस्तु पुरुषः दरिद्रं विहायान्यैर्न कदापि व्यवहरति । दरिद्रोऽपि तस्मै विवेकं प्रदातुमेव तमुपगच्छति । “ दत्त्वा त्वादृशो भव, अदत्त्वा मादृशो मा भव ” इति बोधितुमेव सः भगवता प्रेष्यते । तथापि धनिकः दरिद्रागमनस्याशयं ज्ञातुं न पारयति । अतस्तं दूषयित्वान्यत्र प्रेषयितुं धनिकस्तेन सल्लापयितुमारभते । स्वस्मिन् विद्यमानं धनं ईश्वरप्रसादलब्धमित्यजानन्नभिमानेन सः आलपन् संसारसागरे निमज्जति । प्रस्थानकाले संप्राप्ते स्वीयं धनं कीदृशीं आधिमुत्पादयतीत्यंशः विवेकिभिर्ज्ञेयः ॥

केन आडम्बरभक्ताः अत्याचारानाचारदुराचारेषु मग्नाः भगवंतमर्चयन्ति । तेषामवस्थामत्र वर्णयन्ति—

तनुव नोयिसि मनव बळलिसि निम्म पादविडिदवरोळरे? ई नुडि सुडदिहुदे? कूडलसंगमदेव! शिवभक्तर नोवे अदु लिङ्गद नोवु ॥ ८७ ॥

मनो निपीड्यापघनं विशोष्य गृह्णाति यस्ते तव पादयुग्मम् ।
किं तेन सभ्यस्य भवेन्मनुष्यः स किं प्रियः स्यात्परहिंसको हि ॥
त्वद्भक्तपीडा ननु लिङ्गपीडा दहेत्पुमांसं गुरुसङ्गमेश ।

People who cause injury to the the body and pain to the mind of the devotees of Siva will suffer in their various walks of life. The sorrow of Shivabhaktas is sorrow to Shiva Himself. That will consume the very person who causes such injury.

एवं तनुमनःपीडनेन यः प्रदर्शनार्थं भगवंतमर्चयति सः लोकं प्रतारयन्नेव भगवदाग्रहभाजनं भवति । तदर्चनायाः दुष्परिणाम एवं निरूप्यते—

कोपि मज्जनक्केरेदरे रक्तद धारे· पापि हूवनेरिसलु मसेदायुधद गाय. कूर्पवरनारनू काणेनु मादारचन्नय्यनल्लदे ; कूर्पवरनारनू काणेनु डोहारकक्कय्यनल्लदे. व्यापियुळ्ळ नम्म मडिवाळमाचय्य निन्नापत्तिगिरुवरय्य, कूडलसङ्गय्य ॥ ८८ ॥

क्रोधाविष्टः स्नापयत्यम्बिकेशं तच्च स्नानं रक्तधारासरूपम् ।
पापात्मा चेत्पुष्पभारोपहारं कुर्यादेतत्खड्गधाराव्रणं स्यात् ॥
मादारचन्नय्यमिहाद्य मुक्त्वा पश्यामि नान्यं खलु भक्तवर्यम् ।
डोहारकक्कय्यमिहाद्य मुक्त्वा पश्यामि नान्यं खलु भक्तवर्यम् ॥

माचय्यनामा मडिवाळ एषो भक्ताग्रगण्यः परमात्मनिष्ठः ।
भक्ता इमे सन्ति भवद्विपत्तौ तदेतदाश्रावय सङ्गमार्य ॥

If an angry man pours water on Linga, it is like pouring blood on a person. If an evil-doer casts flowers on Linga, it is like the touch of a sharp instrument. Worship should be offered with deep faith and devotion like Madara Channaiah, Dohara Kakkaiah and Madivala Machaiah who live puerly for God's service.

अन्तश्शुद्धिं विना गङ्गादिस्नानादेव न कोऽपि सत्परिणामस्संभवेदित्याह--

तोरॆय मीव अण्णगळिरा! तोरॆय मीव स्वामिगळिरा! तोरॆयिं भो! तोरॆयिं भो! परनारिय संगव तोरॆयिं भो! परधनदामिषव तोरॆयिं भो! इव तोरॆयदे होगि तोरॆय मिन्दरॆ बरु दोरॆ होहुदु कूडलसङ्गमदेव ॥ ८९ ॥

हे मानवाः संशृणुतोक्तिमेतां जलेऽवगाहात्किमु लभ्यते वः ।
परस्त्रियं संपरिहाय दूरे तथैव वित्तं परिहाय चान्यम् ।
जलेऽवगाहान्ननु सा विशुद्धिः स्यादेव सत्यं न हि तत्पुरस्तात् ॥

O my brothers, and Swamiji's who bathe in rivers! You first avoid others' women and others' wealth. Without doing so, bathing in sacred rivers is of no good.

भक्तः लिङ्गार्चनमग्नः लिङ्गतत्त्वं ज्ञात्वा स्वस्मिन्ननुभवितुं प्रयतेत । सः यदि अन्तर्ज्योतिरनुभवितुमशक्तः बाह्यार्चनायामेव निरतो भवेत् तदा न किमपि फलं विन्देत । अन्तरनुसन्धान-प्रकारमत्र कथयति—

होरगने कोट्टु होरगने पूजिसिद्रे परिणामविल्ल. सुख दोरकोळ्ळदु नोडा. अदन्तेन्दोडे सर्वजीवङ्गळल्लि हिंसेय माडदिप्पुदे प्रथमपुष्प. सर्वेन्द्रियङ्गळ निग्रहिसिकोण्डिरवल्लरे द्वितीयपुष्प. सर्वा-हङ्करवरतु शान्तनागिरवल्लडे तृतीयपुष्प. सर्वव्यापकवळिदु निर्व्या-पारियागिरबल्लडे चतुर्थपुष्प. दुर्भावप्रकृतियळिदु सद्भाव एडे-गोंडिरवल्लडे पञ्चमपुष्प. उण्डु उपवासि, बळसि ब्रह्मचारि-यागिरबल्लडे षष्टपुष्प· अनृतव मरेदु सत्यव नुडियबल्लडे सप्तमपुष्प. सकलप्रपञ्चवळिदु शिवज्ञानसंपन्ननागिरबल्लडे अष्टमपुष्प· इन्ती अष्टदळकमलदल्लि सहस्रपूजेय माडबल्ल शरणरु निम्म प्रति-बिम्बदन्तिप्परु काणा कूडलसंगमदेव ॥ ९० ॥

वाह्यार्चनादेव सुखं न लभ्यते फलं न किञ्चित्परिणामतश्च ।
समस्तजीवेषु विनैव हिंसां संप्रीणनं स्यात्प्रथमं हि पुष्पम् ॥
सर्वेन्द्रियग्रामविनिग्रहो वै द्वितीयपुष्पं हृदये निवेश्यम् ।
अहं ममेत्यादि विसृज्य शान्त्या सद्वर्तनं स्याच्च तृतीयपुष्पम् ॥
फलाभिलापारहितं च कर्म कृत्वात्र मौनं हि तुरीयपुष्पम् ।
विहाय दुर्भावमसह्यतावहं सद्भावयोगात्सुमनस्तु पञ्चमम् ॥

भुक्त्वोपवासी शिवयोगनिष्ठः सन्तिष्ठते चेत्कुसुमं च षष्ठम् ।
सदुक्तिरेवानृतविप्रयोगात् संभाव्यते सप्तमपुष्पमेषा ॥

सर्वप्रपञ्चे शिवभावनैव सङ्कीर्त्यते त्वष्टमपुष्पमेव ।
एतादृशे ह्यष्टदळाख्यपुष्पे सहस्रपूजां विरचय्य लोके ॥
शरणाश्च ते कूडलचन्नसङ्ग वसन्ति नित्यं तव बिम्बभावे ।

Lord Kudala Channasanga ! To pluck flowers and offer them to you, is no good. It does not offer any solace or happiness. There are flowers to be offered internally. Not hurting any living creature on earth constitutes the first flower. The control of all organs forms the second flower; Giving up conceit and maintaining equable temper forms the third flower. Forsaking all attachment while carring on business forms the fourth flower. To be righteous in conduct giving up evil practices is the fifth flower. To fast in spite of eating, and remain celibate in spite of being married is the sixth flower. To speak truth only, forsaking all false means is the seventh flower. To saturate oneself with the Knowledge of Siva while residing in the world is the eighth flower. Sharanas who can worship You with these eight flowers remain in this world as a reflection of Yourself.

एवमष्टदळकमलैः यः स्वांतज्योंतिरविरतमर्चयति स एव तदनुभवं प्राप्नोति । बाह्यपूजायाः फलं त्वेतदेव यया मानवः आन्तरपूजायां औत्सुक्यं प्राप्नुयात् । प्रापञ्चिकास्तु केचन पूजायाः याथार्थ्यमजानानाः बाह्यपूजामेव आडम्बरेण कुर्वन्तः कारयन्तश्च न किमपि फलमधिगच्छन्तो भवसागर एव निमज्जन्तीत्याह—

अगवणिपत्रपुष्पधूपदीपनिवाळेयल्लि पूजिसि पूजिसि बळलुत्तिद्दारे· एनेन्दरियरु एन्तेन्दरियरु· जन मरुळो जात्रे मरुळो एम्बन्ते एल्लरू पूजिसि एननू काणदे लयक्कोळगागिहोदरु गुहेश्वर ॥ ९१ ॥

जलेन पत्रेण च पुष्पधूपनीराजनाद्यैर्भृशमर्चयित्वा ।
ग्लानिं गता यद्यपि तथ्यमर्थं विदुर्जना नैव च तत्प्रकारम् ॥
गतानुगन्यायमथोत्सवानुगन्यायं समालम्ब्य वर्तैष लोकः ।
संपूज्य लिङ्गं हि किमप्यलब्ध्वा किमत्यदृष्ट्वा म्रियते गुहेश्वर ॥

The worldly-minded people are engagep usually in the worship of God offering flowers, fruits, scented sticks and camphor and waving lights ignorantly and with blind faith. They know nothing about what to worship and how to worship. Following the blind practice of others individually and collectively, they worship God and offer something. Thus they end their lives without enlightenment.

नीर कण्डल्लि मुळुगुवरय्य ! मरन कण्डल्लि सुत्तुवरय्य ! बत्तुव जलव बणगुव मरन नेच्चिदवरु निम्मनेत्तबल्लरु देव ॥ ९२ ॥

दृष्ट्वा जलं स्नान्ति तथा तरुं च दृष्ट्वैव सम्यक्परियन्ति मूढाः ।
शुष्यत्तरुं चाप्यथ वारि तादृक् ये विश्वसन्तः पुरुषास्तु लोके ॥
कथं विजानन्ति गुरोः स्वरूपं संगार्यदेवस्य हि दिव्यमूर्तम् ।

People with blind belief plunge in rivers whenever and wherver they see. They prostrate before wooden images. How can such persons know the eternal and immortal God Sangama ?

एतादृशैरविवेकिभिः क्रियमाणस्य लिङ्गार्चनस्य तद्धारणस्य च नैरर्थक्यं सदृष्टान्तं निरूपयति—

होट्टेयमेले कट्टोगरद मोट्टेय कट्टिदरेनु ? हसिवु होहुदे ? अंगद मेले लिंग स्वायतवादडेनु ? इट्ट कल्लु मेळेय मेले सिक्किदडे आ कल्लु लिंगवे ? आ मेळे भक्तने ? इट्टात गुरुवे ? इन्तप्पव कण्डडे नानु नाचुवेनय्य गुहेश्वर ॥ ९३ ॥

पाथेयबन्धादुदरोर्ध्वभागे क्षुधो निवृत्तिः किमु दृश्यतेऽत्र ।
तथैव लिंगस्य हृदूर्ध्वभागे संधारणादेव किमद्य लभ्यम् ॥
वेण्वन्तरे केनचिदश्म दत्तं लिंगात्मतां गच्छति किं कदापि ।
तथैव वेणुर्न भवेद्धि भक्तः गुरुश्च किं क्षेपणतः शिलायाः ॥
एतादृशन्वीक्ष्य ममैव लज्जा सञ्जायते सत्यमहो गुहेश्वर ।

If you place food on your stomach, will it quell hunger? If you wear Linga on your body without realising your identity with it, does the body become sacred? If a stone sticks to the bamboo bush, does it become Linga? Does the bamboo bush become a devotee and does the stone-thrower become a guru?. I am ashamed to see such ignorant people.

एवं च लिंगतत्त्वं अविज्ञाय केवललिंगधारणादर्चनाच्च न किमपि फलं लभ्यत इत्याह सनिदर्शनम् —

अर्थरेखे इद्दल्लि फलवेनु आयुष्यरेखे इल्लदन्नक ? हन्देय कैयल्लि चन्द्रायुधविद्दु फलवेनु ? अन्धकन कैयल्लि दर्पणविद्दु फलवेनु ? मर्कटन कैयल्लि माणिक्यविद्दु फलवेनु ? कूडलसंगन शरणरनरियदवर कैयल्लि लिंगविद्दु फलवेनु, शिवपथवनरियदन्नक ? ॥ ९४ ॥

आयुष्यरेखा यदि नास्ति हस्ते किमर्थरेखा फलमावहेन्नु ? ।
क्लीबस्य चन्द्रायुधधारणात्किं भवेज्जनस्यास्य कथं हि रक्षा ? ॥
अन्धस्य हस्ते मुकुरार्पणात्किं स्वस्यैव सौन्दर्यमवेक्षते सः ।
सज्ञार्यभक्तान्न विदन्ति ये तु तेषां करे किन्नु करोति लिंगम् ? ॥
अतश्च लिंगार्चनतत्परैस्तु विज्ञेयमादौ खलु लिंगतत्त्वम् ।

What is the good of wealth-line in the Palm if the life-line is not good? What is the

good of a crescent-lance in the hands of a coward? What is the good of a mirror in the hands of a blind man or a diamond in the hands of a monkey? What is the good of Ishtalinga in the hands of those who have not realised the greatness of saints and are ignorant of Spiritual path.

मणियनेणिसि दिनव कळेयलु बेड. कणिय पूजिसि दिनव कळेयलु वेड. क्षणवादरू निजद नेनहे साकु. क्षणदोळगर्धवादरू निजद नेनहे साकु. वेङ्कियोळगुव्ळ बिसि नीरोळगुण्टे गुहेश्वर ॥९५॥

मालां मणीनां गणयन्दिनं तु नैव व्यतीयाः, कुरु भक्तिमेव ।
अभ्यर्च्य मूर्ति दिनमेव सर्वं नैव व्यतीयाः, कुरु भक्तिमेव ॥
वस्तुस्वरूपं क्षणमात्रमेव संस्मृत्य मुक्तो भव मानवाद्य ।
अपि क्षणार्धं निजतत्त्वमेव संस्मर्यते चेदिदमेव वाऽलम् ॥

It is not necessary to spend the day counting beads or indulging in the worship of an image without knowing the idea lying behind it. A few minutes of soulful contemplation is more fruitful than the various types of worship. The heat of the warm water cannot equal the heat of the fire, O Lord Guheswara!

एवञ्च लिंगतत्त्वमविज्ञाय कृतं लिंगार्चनं धारणं वा निरर्थकमेव जायेत । अत एव ज्ञानक्रिययोर्मेळनस्य महत्त्वमत्र

प्रतिपद्यते । ज्ञात्वा यत्क्रियते तदेव सफलं भवतीत्यर्थः ॥

एवमाडम्बरभक्तानामविचारितामन्धश्रद्धापूरितामर्चनां निरूप्य सद्भक्तस्य सद्भावनाप्रकारमधुना निरूपयति--

निम्म पूजिसिहेनेंदडे तनुविल्लवय्य एनगे· अदेनुकारण-वेंदडे एन्न तनुवे नीवेयादिरागि· निम्म नेनेदिहेनेंदडे अरुहिल्लवय्य एनगे· अदेनु कारणवेंदडे आ अरुहे नीवेयादिरागि· अखण्डेश्वर निम्मोळगे नानु उरिगोण्ड कर्पुरदंतिर्देनय्य ॥ ९६ ॥

त्वामर्चयामीति विभाव्यते चेन्न चास्ति देहो भवतः पृथङ्मम ।
त्वां चिंतयामीति विभाव्यते चेन्न चास्ति चित्तं भवतः पृथङ्मम ॥
वसन्भवत्येवमखण्डदेव ज्वलत्सुकर्पूर इवास्मि देहे ।

My Lord Akhandesha ! If I would say that I have worshipped you, I will be in the wrong; because I have no body, as my body is Your-self. Similarly, I cannot devote the mind to meditate on You, because my mind is yourself. Hence I am in you like lighted camphor.

आडि काल्ु दणियवु· नोडि कण्णु दणियवु. माडि कै दणियवु. हाडि नालिगे दणियदु. इन्नेवे, इन्नेवे. ना निम्म कैयारे पूजिसि मन दणियलोल्लदु. इन्नेवे, इन्नेवे. कूडलसङ्गम-देवय्य, हेळय्य निम्मुदरव बगिदानु होगुव भरवेनगे ॥ ९७ ॥

प्रणत्यै पादौ न हि दुःखमापतुः दृष्ट्वापि नेत्रे नहि दुःखमीयतुः ।
कृत्वापि हस्तौ नहि दुःखमापतुः गात्वापि जिह्वा नहि दुःखमाप्नुयात् ॥
त्वामद्य संपूज्य मदीयहस्तात् मनश्च तुष्टिं न लभेत नूनम् ।
किमद्य कुर्यां वद सङ्गमार्य कथं विशेयं भवतो हृदब्जम् ॥

My feet are not tired by questing for You. My hands are not tired by serving You. My voice is not exhausted by singing You. My eyes are not tired by looking at You. Still I am not satisfied. I solely desire to enter Your stomach and became one with You.

आनु भक्तनल्ल. आनु युक्तनल्ल. नीवु माडिद सूत्रद बोम्बे नानय्य. एनगे बेरे स्वतंत्रवुण्टे? नीवेन्न मानाभिमानक्के वडेयराद बळिक एन्न तप्पु लेक्किसदे विजयङ्गैवुदय्य कूडल-संगमदेवय्य ॥ ९८ ॥

भक्तो न चाहं न च योगमाप्तः त्वन्निर्मिता तन्तुमयीव योषा ।
पृथङ्ममाप्यस्ति किमु स्वतन्त्रता मानाभिमानौ भवदाश्रितौ मम ॥
ततो दयस्वैन उदस्य मामकं त्वद्भृत्यभृत्यं गुरुसंगमेश ।

God Sangama! I am not a devotee, I am not even united with You. I am merely a puppet toy in your hands. I have no independence. You are my sole master. Forgive my faults and grant me illumination.

एन्न कायव दण्डिगेय माडय्य. एन्न शिरव सोरेय माडय्य. एन्न नरव तन्तिय माडय्य. एन्न वेरळ कड्डिय माडय्य. मूवत्तेरडु रागव हाडय्य. एन्न उदरदलोत्ति निन्न जयगानव बारिसु कूडलसंगमदेव ॥ ९९ ॥

मदीयकायं कुरु दण्डमेव तथैव मूर्धानमलाबुरूपम् ।
पादप्रवेशं बत वार्धिरेष: दोषात्मना किं मनुते कदापि ? ॥
त्वमेव जानासि यदेव मत्प्रियं तथैव जानासि यदप्रियं तत् ।
तवैव पाद: परमं प्रमाणं तथैव मे चित्तमपीह साक्षी ।

Let my body be a stick. Let my head be a bottle gourd. Let my nerves form the strings. Let my fingers form the fork. Play on me the thirtytwo tunes extolling Your glory.

एवं भक्त: सर्वार्पणभावेन शरणागतो भूत्वा भगवत्सेवां कर्तुमेव सर्वदा सदवकाशं निरीक्षमाणो वर्तते । एवं गुरुजंगम-सेवया भगवदनुग्रहप्राप्तिं विना पुरातनानां भक्तानां स्मरणमात्रेण न किमपि फलं विन्दते साधक इत्याह--

कुरूपि सुरूपिय नेनेदरे सुरूपियप्पने? आ सुरूपि कुरूपिय नेनेदरे सुरूपियप्पने? धनवुळ्ळवर नेनेदरे दारिद्र्य होहुदे? पुरातनर नेनेदु कृतार्थरादेवेम्बरु. तम्मल्लि भक्तिनिष्ठेयिल्लदवर कण्डडे मेच्चनु गुहेश्वर ॥ १०० ॥

सुरूपिणश्चिन्तनतः कुरूपी सुरूपतामेति किमु प्रशस्ताम् ।
तथा सुरूपी च कुरूपिचिन्तया कुरूपतामेति किमु प्रहीणाम् ॥
धनाढ्यसञ्चिन्तनतो दरिद्रता निवृत्तिमेयात्किमु सत्यमेव ।
पुरातनानां स्मरणाच्च केवलादुदीरयन्तीह कृतार्थतां नराः ॥
यस्मिंश्च भक्तिर्न न हि निष्ठया युता गुहेश्वरस्तं न हि विश्वसेत् खलु ।

An ugly man cannot become handsome by looking at a handsome person. A poorman cannot become rich by looking at the rich. A sinner cannot become a saint by thinking of old saints. Only by ascetic devotion to God will one obtain salvation.

कैदुविडिदवरेल्लरू हिरिवरे ? साधनेय माडुवरेल्लरु कादवल्लरे ? अथिगे माडतक्क कर्तव्यवन्तरेल्लरु भक्तरप्परे ? अदु चन्देश्वरलिङ्गक्के मुट्टद माट ॥ १०० ॥

खड्गस्य भर्ता किमु सर्वथैव विद्ध्याच्छरीरं परिपन्थिनां रणे ।
संसाधनव्यग्रमनास्तु संख्ये किमेष जानाति नरो हि योद्धुम् ॥
किं वाऽर्थिनां पूरणमात्रनिष्ठाः भक्ता भवेयुर्वद तत्त्वशस्त्वम् ।
तदेव भूयादभिचार एव चन्देशलिङ्गाय सुभक्तिहीनम् ॥

Does holding a weapon make a warrior? Does martial exercise make a combatant? Does wearing a Linga make one a devotee? Does

giving alms to a Jangama make a Bhakta? The grace of Chandeswara Linga cannot be achieved just by these external symbols.

मदहस्ति मदहस्तिय हिडिवुदल्लदे मत्तोन्द हिडियदु. अरूपु अरूप हिडिवुदल्लदे मत्तोन्द हिडियदु. रूपिल्लदातन रूपिगे हिडिवेनु, कपिलसिद्धमल्लिकार्जुन ॥ १०१ ॥

मदोत्कटं हस्तिनमत्र नूनं मदोत्कटो वारण एव भर्ता ।
तथैव रूपाद्विधुरोऽप्यरूपं गृह्णाति नान्यं विदितं हि लोके ॥
अतो ह्यरूपित्वमिताहमद्य रूपाद्विहीनं गुरुमल्लिकार्जुनम् ।
गृह्णामि तथ्यं कपिलार्यसिद्ध दयस्व दासीं भवदीयभक्ताम् ॥

The great elephant will consort with the great elephant alone. The formless being can only consort with the Formless Being. So my soul which is formless seeks You who are Formless, O Lord Mallikarjuna!

भगवद्भक्ताः ऐहिकसंपद्विहीना अपि अध्यात्मसंपद्भरिताः पारमैश्वर्येण नित्यसौन्दर्येण च शोभन्त इत्याह—

मने नोडा बडवरु ; मन नोडा संपन्नरु ; धन नोडा बडवरु ; धनमनसंपन्नरु ; कूडलसंगन शरणरु करुळिल्लद कलिगळु. आरिगुपमिसबारदु ॥ १०२ ॥

गृहं यदीक्ष्येत तदा दरिद्राः चित्त यदीक्ष्येत तदा समृद्धाः ।
धनं यदीक्ष्येत तदा दरिद्राः सत्त्वं यदीक्ष्येत तदा समृद्धाः ॥
श्रीसंगमेशे शरणागता ये निरञ्जना नैव तुलां लभन्ते ।

Their house is poor but their mind is large. They are poor in money but their heart is big. Thus the Sharanas of Sangama Deva are persons who seek no worldly wealth but are rich in devotion to Him. They are absolutely incomparable.

अंगक्के बडतनवल्लदे मनक्के बडतनवुण्टे ? बेट्ट वल्लित्तेन्दरे उळिय मोनेयल्लि बडतनवुळ्ळरे वडेयदे ? घन शिवभक्तरिगे बडतनविल्ल. सत्यरिगे दुष्कर्मविल्ल. एनगे अमळेश्वर-लिंग उळ्ळनक्क आर हंगू इल्ल, मारय्य ॥ १०३ ॥

अंगस्य दारिद्र्यमिहास्ति चित्ते किमस्ति दारिद्र्यमिदं विचिन्तय ।
गिरिर्महानस्तु तथापि नित्यं टङ्कस्य दारिद्र्यगुणाद्धि भिद्यते ॥
घनेषु भक्तेषु दरिद्रता नो सत्यात्मकानां न च दुःखकर्म ।
न मेऽस्ति दाक्षिण्यमतश्च तावद्यावच्च युक्तास्म्यमळेश्वरे सदा ॥

Poverty is for the body and not for the mind. Even if the mountain is strong does it not get broken if the chisel is reduced to thinness at the edge. There is no poverty and no sin to the genuine devotees as they always stick to

truth. So long as I am immersed in Amaleswa ra Linga, I need not bother myself with anybody's obligation, O Marayya!

एदे बिरिवनक, मन दणिवनक, नालिगे नलिनलिदोडाडुवनक निम्म नामामृतव तन्दिरिसय्य एनगे, एन्न तन्दे. बिरि मुगुळन्ते एन्न हृदय निम्म श्रीचरणद मेले बिद्दु अरळुगे, कूडलसंगमदेव ॥ १०४ ॥

यावद्विदीर्णं भवितेह वक्षः यावत्प्रयासो भवितेह चित्ते ।
यावच्च जिह्वा प्रसरेद्बहिस्तु तावच्च नामामृतमेव पेयम् ॥
सूर्यप्रकाशात्कलिकेव हासं चित्तं ममाप्येतु भवत्पदाब्जे ।
संगार्यदेव! भवदीयपादसंस्पर्शनादेतु मनो विकासम् ॥

Until my heart palpitates, until my mind is tired, until my tongue becomes exhausted, let me swallow the nectar of your delightful name. Like a flower-bud, let my heart fall on your sacred feet and blossom.

एवं भक्तः सदा सन्तुष्टचित्तः पारमैश्वर्यसुखमनुभवितुं शरीरदार्ढ्यकाल एव प्रयतेतेत्याह—

नेरे केन्नेगे तेरे गल्लक्के, शरीर गूडुवोगद मुन्न, हल्लु होगि, बेन्नु बागि, अन्यरिगे हङ्गागद मुन्न, कालमेले कैयनूरि

कोलु हिडियद मुन्न, मुप्पिन्दोप्पवळियद मुन्न, मृत्यु मुट्टद मुन्न पूजिसु कूडलसंगमदेव ॥ १०५ ॥

यावत्कपोलौ सुदृढौ भवेतां यावच्च देहः शिथिलो न च स्यात् ।
यावच्च दन्ताः पतिता भवेयुः यावच्च पृष्ठास्थि नमेच्च तावत् ॥
पराश्रयित्वं न भवेच्च यावत् तावद्भजस्वार्यमिमं च भक्त्या ।
दण्डं समालम्ब्य च जानुसंश्रयात् उत्थाय यावन्न चरेद्धि तावत् ॥
वार्धक्ययोगाच्च सुरूपमेतत् यावन्न नश्येन्मरणं च न स्यात् ।
तावत्प्रभुं कूडलसङ्गमार्यं संपूजयेन्मानव जन्मबन्धुम् ॥

Before your cheeks sink and hair whitens, before the body becomes disordered and bones get bent, before you become old, decrepit and dependent on others, before death overtakes you, worship Lord Sangama with devotion.

एवं देहशक्तिमानेव भक्तो यदा भगवदर्चने निमग्नो भवेत् तदैव अर्चनं तत्स्वभावरूपतया परिणमेत । अत एव शरणाः सर्वेषामपि मानवानां प्रातरुत्थानसमये शय्यायामेव भगवदर्चनां आरम्भयितुमपेक्षन्ते । तद्यथा—

मुन्दुजावदलेद्दु लिंगदंघ्रिय मुट्टि सुप्रभातसमयदल्लि सद्भक्तर मुखव नोड्डुवुदु· हुट्टिदुदक्किदे सफल नोडा· सत्यवचनविन्तेन्दुदु गुहेश्वर ॥ १०६ ॥

उत्थाय यामे चरमे सुभक्तो नेत्रस्थलिंगं सपदि स्पृशन्हि ।
तथा प्रभाते वरभक्ततुल्यं स्वहस्तमेवाभिमृशेत्तदैव ॥
तदैव जन्मी सफलत्वमेति सत्योक्तमेतज्जगतो हिताय ।

One should rise in the early dawn and touch his eye wherein is situated the Divine Light. Immediately after that kind of worship, one should behold one's own hands which serve God as true devotees. To realise God and his devotees in oneself is the real purpose of life. Thus says the celestial song of Lord Guhesha.

तनुमन:प्राणै: परमात्मार्चनपरस्य सद्भक्तस्य वर्तनं, तदधिगतं फलं च निरूप्य अर्चनपद्धतिरुपसंह्रियते—

तनु निम्म पूजिसुव कृपेगे सन्दुदु. मन निम्म नेनेव ध्यानक्के सन्दुदु. प्राण निम्म रतिसुखक्के सन्दुदु. इन्तु तनुमानप्राण निमगे सन्दिप्प निस्सङ्गियह निश्चटनिजलिङ्गैक्य काणा गुहेश्वर ॥ १०७ ॥

त्वदीयपूजार्थतया कृतार्थतां तनुः प्रपेदे तव चैव चिन्तनात् ।
स्वान्तं तथात्मा खलु तुष्टये तव त्वय्यर्पितत्वात्सफलं त्रयं ननु ॥
सङ्गम्य तस्मात्त्वयि धन्यतां गतो ह्यसङ्ग एवास्मि गुहेश्वरप्रभो ।

O Lord Guhesha ! My body is reserved for your service, My mind is devoted for Your

meditation. My life is meant for Your recreation. By surrendering my body, mind and life, I have become impersonal and dispassionatate and thus realied oneness with You.

लिंगव पूजिसि फलवेनय्य? समरति समकळे समसुखवनरियदन्नक्क? लिंगव पूजिसि फलवेनय्य नदियोळगे नदि बेरसिदन्तागदन्नक्क, कूडलसंगमदेव ॥ १०८ ॥

अङ्गस्य लिङ्गेन चिदैक्यनिश्चयात् भावैकरस्यं न च लभ्यते यदि ।
समस्वभावो न च लभ्यते यदा लिङ्गार्चना किं फलमावहेत्तदा ॥
यथैव नद्या सह सङ्गता नदी स्वरूपभेदं विजहाति तद्वत् ।
आराधको लिङ्गसरूपतां न चेदाप्नोति किं तेन च पूजनेन ॥

What is the Good of worshipping and wearing Istalinga, if one does not become identified with It both internally and externally? Just as a river which meets another river becomes identified with it, the worshipper should become united with the Worshipped. All worship of mankind should end in the realisasion of oneness with God.

———

## अर्पणपद्धतिः

शरीरिणः सर्वेऽपि येन केनापि भावेन भगवन्तमर्चयित्वा स्वेषु विद्यमानानि भोग्यजातानि भगवते समर्प्य प्रसादरूपेण यदि भुञ्जीरन् तदा ते सर्वदुःखविमुक्ताः भवेयुः। अधुना तु सर्वे दुःखमग्ना एव वर्तन्ते। सर्वभोग्यवस्तुभोगेनापि सुखलेशमपि ते न पश्यन्ति। भोगानुभवेनापि दुःखिनो यदि भवेयुर्जनास्तत्र किमपि कारणं वर्ततैव। भोगानुभवेन जनैः सुखिभिर्भाव्यम्। परन्तु तद्विपरीततया दुःखमेवानुभूयते। भोग्यवस्तूनि यतः पदार्थ-भावनया तैरनुभूयन्ते तत एव तेषु तृप्तिर्न विद्यते। यत्र तृप्ति-स्तत्रैव शान्तिर्निरीक्ष्येत। अशान्तस्य सुखं नास्त्येव। सामान्य-जनानां परिस्थितिरेवं विषमा भीकरा च वर्तते। सर्वे च व्यवहारैः फलानि लभन्ते; तथापि ते अशान्ता एव वर्तन्ते। जनाः परस्परं संविक्षा यं कमपि देवमनियतमर्चयन्ति; तथापि सर्वानपि देवान् एकस्यैव मूर्तामूर्तरूपिणो महादेवस्य दिव्यमूर्तीर्भावयित्वा तमपि देवं स्वप्राणमिति विश्वस्य यद्यर्चयेयुस्तदा ते शान्तास्तृप्ताश्च भवेयु-रिति प्रागेव निरूपितम्॥

एवं श्रद्धया ये स्वकीयं देवं स्वप्राणतुल्यं भावयित्वा अर्चयेयुस्तैरेव नित्यसुखं अवश्यं लभ्येत। एतादृश्या सद्भावनया ये अर्चयन्ति ते कथं नित्यसुखिनो भवेयुरित्ययमेवांशोऽधुना परि-

शीलनीयः। ये देवं स्वप्राणभावनया अर्चयन्ति त एव सुखिनः, अन्ये च दुःखिनो यदि भवेयुस्तत्र किं कारणं स्यात् ? अस्ति च कारणम्। ये प्राणभावनया परमात्मानं शरीरे नित्यं संधार्य समर्चयेयुस्ते सर्वमपि भोग्यजातं स्वसुखाय नोपयुञ्जन्ति; परन्तु स्वप्राणरूपाय परमेश्वराय समर्पयितुकामा एव भवन्ति। नैकमपि भोग्यं वस्तु स्वस्मै केवलं सृष्टमिति ते भावयन्ति। देहेन्द्रियादिकं सर्वमपि भगवत्कैङ्कर्यार्थमेव विनियोक्तुं ते अभिलपन्ति। परमात्मने असमर्प्य न किमपि फलं स्वकुक्षिपूरणार्थं ते नोपयुञ्जते। आहार-विषयिणी स्वार्थमयी इच्छा तेषु न विद्यते। स्वेषां भोग्यं सर्वमपि भगवत एव समर्प्यमित्यंशस्तैर्विदितः। अत एव ते नित्यसुखिनो भवेयुः। यतस्ते परमात्मानं स्वप्राणतुल्यं भावयन्ति ततस्सः तेषामिष्टदैवतस्संपद्यते। एवं प्राणरूपमिष्टलिङ्गं ये अर्चयन्ति तेभ्यः आत्मार्पणं विहाय नान्यो मार्गो विद्यते। आत्मैव यद्यर्प्यते तदा भोग्यजातमपि अर्पितप्रायमेव भवेत्। अत एव प्राणभावनया ये अर्चयन्ति ते त्वर्पणचतुरास्ततः प्रसादजीविनो भवन्ति। प्रसादजीविनां तु दुःखस्य गन्धोऽपि नास्ति। ये त्वर्चकाः उपास्यं देवं स्वप्राणतुल्यं न भावयन्ति ते तु प्राणस्य नित्याभियोगं नाधि-गच्छन्ति। प्राणरूपस्येश्वरस्य नित्यसंपर्काभावे तत्र अर्चकस्य सजीवविश्वासो नोत्पद्यते। तस्य सर्वार्पणभावोऽपि न सिद्ध्यति। यो देवस्तैः समर्च्यते स एव तेषां हृदये मनसि शिरसि सर्वेन्द्रियेषु बहिरन्तश्च वर्तत इत्यखण्डभावना तेषु नोत्पद्यते। स्नानात्पूजासमये

एव तेषु देवसंबन्धो जायते । अतस्ते भोग्यवस्तुजातं स्वसुखायैव जिह्वाचापल्यपरिहारायोपयुञ्जन्ति । भोगकाले सुखं समागतमपि दुःखेनानुस्त्रियत एव । सुखस्य सर्वस्यापि विनाशित्वात् दुःख-योनित्वच्च दुःखाऽसंस्पृष्टं नित्यसुखं प्राप्तुं ते न पारयन्ति । ये सर्वमपि भोग्यजातं परमात्मने समर्प्य भुञ्जन्ति त एव प्रसादजीविनो भवेयुः । ये तु पदार्थभोगिनः ते नित्यदुःखिनो भवन्त्येव ॥

अर्पयित्वा ये भुजन्ति ते नित्यसुखिनो भवेयुश्चेत् तदा नित्यसुखसाधनभूतमर्पणं कीदृशम् ? तस्य विधानं च कीदृशम् ? अयमंशोऽत्र विचार्यते । अर्पणं विना स्वदेहपुष्ट्यै न किमपि उपयुञ्जाना आसन् शरणाः । यथा अर्चनार्थं तेऽत्र समागताः तथा अर्पणार्थमप्यत्रागता इति ते भावयन्त आसन् । अतस्तैरनु-स्त्रियमाणा अर्पणपद्धतिरस्माकं श्रेयसे भवेदेव । एवं सर्वार्पणभावस्य तेषु सहजत्वात् तैः देहादिकं सर्वमपि शिवप्रसादभावनयैव लोक-कल्याणाय सदुपयुक्तमासीत् । महात्मा बसवार्यः देहस्य मनसो बुद्धेरात्मनश्च समर्पणात् स्वकीयं व्यक्तित्वं परिहाय परमात्मनि समरसतया विलीय दग्धपट इव लोके दृश्यमानो परहितार्थमेव व्यवाहरत् । सः स्वाशयमेवं निरूपयति—

तनु निम्मदेन्द बळिक एनगे वेरे तनुविल्ल. मन निम्मदेन्द बळिक एनगे वेरे मनविल्ल. धन निम्मदेन्द बळिक एनगे वेरे धनविल्ल. इन्ती त्रिविधवू निम्मदेन्दरिद बळिक एनगे वेरे विचारवुण्टे कूडलचन्नसङ्गमदेव ॥ १ ॥

यतस्त्वदीया तनुरित्यवैमि ततो ममान्या तनुरेव नास्ति।
यस्मात्त्वदीयान्मनसो विभिन्नं मनस्तु नैवेति विनिश्चयो मे ॥
यतस्त्वदीयं धनमेव सर्वं ततो विभिन्नं धनमेव नास्ति।
ज्ञात्वा त्वदीयं त्रयमेतदेवं कथं नु विधेत परो विचारः ॥

When my body is yours, I have no other body. When my mind is Yours, I have no other mind. When my wealth is Yours, I have no other wealth, When these three are Yours, what else should I worry about ?

एवं शरणदृष्ट्या देहादिकं सर्वमपि भगवत्प्रसाद एव। भगवदनुगृहीतान्येतानि साधनानि भगवत्सेवार्थे यः विनियुङ्क्ते स एव नित्यसुखी संपद्यते। यः सेवकः देवाज्ञामुलंघयति सः देवस्य-आग्रहभाजनं भवत्येव। देहस्य वास्तवीं परिस्थितिं यः पश्यति सोऽवश्यमेव स्वीयमन्नपानादिकं सर्वमपि देहस्थाय परमात्मन एव समर्पयति। य एवं न जानाति सः देहात्मभावनया स्वकुक्षिपुर्तये भोजनं कुर्वन् तदानीं सुखी अनन्तरं दुःखी च भवति। अत एव अर्पणनैपुण्यं सर्वैरपि साधकैर्ज्ञेयम्। किं तन्नैपुण्यमिति चेदुच्यते—

माडिदेनेंबुदु मनदल्लि होळेदरे एडिसि काडित्तु शिवन डङ्गुर. माडिदेनेन्नदिरा लिङ्गक्के. नीडिदेनेन्नदिरा जङ्गमक्के. माडिदे-नेम्बुदु मनदल्लिल्लदिद्दरे बेडिद्दनीव कूडलसंगमदेव ॥ २ ॥

मया कृतं कार्यमिदं त्विहेति सञ्चिन्तयन्वै लभते शिवाग्रहम् ।
लिङ्गेऽर्पितं यत्र च वाच्यमेव वर्धिष्णुभिर्लिङ्गपदाभिकांक्षिभिः ॥
यदर्पितं जङ्गम एव भक्त्या तदप्यवाच्यं शिवभक्तिकांक्षिभिः ।
अहं ह्यकार्षं किल कार्यमेतदित्येव चित्ते न निवेश्यते चेत् ॥
इष्टं प्रदद्यात्खलु सङ्गमेशः शिष्टाय चेष्टाय चरात्मकाय ।

If you begin to feel that you have done something for God, you will be doomed. Don't say that you have offered something for Linga or for Jangama. If you perform a task without considering it a claim, Lord Sangama will favour you His blessing. If you give up the first personal pronoun in all your dealings, you will be saved from the evils of life.

एवं सर्वकर्मफलार्पणं कर्तृत्वाभिमानत्यागश्च मानवो यद्यनुसरति तदा सः कृतकृत्यो भवति। एतद्दशार्पणबुद्ध्यैव शरणानां जीवनं पावनं बभूव। तेषामर्पणविधानमत्रोपवर्ण्यते—

छल बेकु शरणंगे परधनवनोल्लेनेम्ब. छल बेकु शरणंगे लिंग जंगम ओन्देम्ब. छल बेकु शरणंगे प्रसाद दिटवेम्ब. छलविल्लदवर मेच्च नम्म कूडलसंगमदेव ॥ २ ॥

परस्य वित्तं नहि मे भवेदित्येषा हि निष्ठा शरणे निरीक्ष्यते ।
परस्य भार्या न हि मे भवेदित्येषा हि निष्ठा शरणे निरीक्ष्यते ॥

परस्य हिंसा न चिकीर्ष्यते मयेत्येषा हि निष्ठा शरणे निरीक्ष्यते ।
लिंगं त्वभिन्नं जरजंगमादित्येषाहि निष्ठा शरणे निरीक्ष्यते ॥
सत्यः प्रसादः परमेश्वरस्येत्येषा हि निष्ठा शरणे निरीक्ष्यते ।
विनैव निष्ठां चरतो नरांस्तु न विश्वसेत्कूडलसंगमार्यः ॥

If one should become a Sharana, he should forswear other's money, other's women and harm to others. He should steadfastly believe that Linga and Jangama are one and the same and that Divine Prasada is true. One who lacks this kind of faith and devotion is not liked by Lord Sangama.

एवं परधनं परसतीं परहिंसां च परित्यज्य यः शिवजगतो भेंदं च हित्वा सर्वं शिवात्मकमिति भावयति स एव शिवप्रसाद-रूपतया परिणमितुं शक्नोति । तस्य मनइन्द्रियादिकं करणजातं प्रसन्नं भवति । मनसि प्रसन्ने सति मानवः अहङ्कामकारौ परित्यज्य शान्तो भवति । संस्काररहितस्य मनसः अप्रसन्नत्वात् सङ्कल्पविकल्पयोराश्रयत्वाच्च रागेद्वषयोरहङ्कारममकारयोश्च प्रवृत्ति-स्सहजो भवेत् । एवंविधयोर्जीवयोर्वैपम्यमत्र निरूप्यते--

माडि माडि केट्टरु मनविल्लदे. नीडि नीडि केट्टरु निजविल्लदे. माडुव नीडुव निजगुणवुळ्ळरे कूडिकोम्ब नम्म कूडलसंगमदेव ॥ ४ ॥

कृत्वा कृत्वा व्याहता दौर्मनस्यात् दत्त्वा दत्त्वा व्याहताः सत्यहानात् ।
कुर्युर्दद्युर्यद्धि सत्यस्य योगात्संयुज्येरन्संगमेश त्वयैव ॥

Some perform actions without sincerity. Some give charity for the show of it. Heart-felt sincere people alone can find God's grace and remain happy in life, being united with Him.

यः वित्तं सद्भावनया परेभ्यो यदि न ददाति तदा तत् शुनः क्षीरमिव व्यर्थं संपद्येत. शुनश्च क्षीरं यथा देवाभिषेकाय न युज्यते तथा पापिष्ठवित्तमपि सत्कार्येभ्यो नोपयुज्यते । अयमाशय एवं निरूप्यते बसवार्येण--

पापिय धन प्रायश्चित्तक्कल्लदे सत्कार्यक्के सल्लदय्य. नाय हालु नायिङ्गल्लदे पञ्चामृतक्के सल्लदय्य. कूडलसंगन शरणरिगल्लदे माडुव अर्थ व्यर्थ कण्डय्य ॥ ५ ॥

पापापनोदाय हि पापिवित्तं सत्पात्र एतस्य न चोपयोगः ।
शुनश्च दुग्धं शुनकाय केवलं ; नैवोपयुज्येत शिवार्चनाय ॥
संगार्य ! भक्तांश्च विहाय तावकान् वृथा धनं स्यादुपयुज्यतेऽन्यथा ।

A sinner's wealth is for expiating sin and not for virtous charity. A dog's milk is for a pup and not for religious offering. Spending wealth otherwise than for Sharanas is as good as waste.

एवमर्पणेऽपि कश्चन विशेषो वर्तते । स्वीकर्ता पुरुषः सद्वर्तनवान्यदि भवेत् तदैव अर्पणं सफलं स्यादित्याह—

आप्यायनक्के नीडुवे. लाञ्छनक्के शरणेम्बे. लाञ्छनक्के तक्क आचरणेयिल्लदिद्दरे कूडलसंगमदेव ! नी साक्षियागि छी एम्बे ॥

आप्यायनार्थं वितरामि देव त्वल्लाञ्छनायैव शिरो नमेयम् ॥
तस्यानुरूपा यदि नास्ति वृत्तिर्निन्दामि तांस्त्वं ननु साक्षिभूतः ।

Marks of orthodoxy are usually respected. But if the marks are not accompanied by devoted action, God Sangamesha will not appreciate.

एवं सद्वर्तनशीलेभ्यः सत्पात्रेभ्यः धनादिसमर्पणेऽपि कश्चन विचारो वर्तते । न केवलं धनं परन्तु तत्क्रीतं सर्वमपि भोग्यं वस्तु उच्छिष्टप्रायमेव । अर्पणाय शुद्धमेव वस्तु उपयोक्तव्यम्, न ह्यशुद्धं वस्तु । परन्तु लोके शुद्धमेव वस्तु नास्ति । अतः कथमर्पणविधिराचरितव्या ? अयमंशोऽत्र निरूप्यते––

हालेञ्जलु पैयन. उदकवेञ्जलु मत्स्यद. पुष्पवेञ्जलु तुम्बिय. एन्तु पूजिसुवेनय्य. शिवशिव ! एन्तु पूजिसुवे. आ एञ्जलव-नतिगळेवोडे एन्नळवल्ल. बन्दुद कैको कूडलसंगमदेव ॥ ७ ॥

गोः क्षीरमुच्छिष्टमथोदकं तु मत्स्यस्य तावद्भ्रमरस्य पुष्पम् ।
कथं नु कुर्यां भवदीयपूजां शंभो गुरो त्वां कथमर्चयामि ॥

उच्छिष्टमेतत्परिमार्ष्टुमद्य मया न शक्यं गुरुसंगमार्य ! ।
यदेव दत्तं भवता मदर्थं तदेव तुभ्यं हि समर्प्यते नु ॥

Milk is a pollution of the cow. Water is the refuse of the fish. Flower is the refuse of the bea. How shall I worship you with them ? Hence, it is not my fault, my Lord. I am concerned only with the offering of what you have favoured me. I offer them to You in good faith and devotion.

तत्रापि केचन निर्दिष्टवस्त्वेव अर्पयितुं नियमं कुर्वन्ति । तादृशो नियमः अर्पणे न युज्यत इत्याह—

हाल नेम ; हाल केनेय नेम ; केने तप्पिद बळिक किच्चडिय नेम ; वेण्णेय नेम ; वेल्लद नेम ! अम्बलिय नेमदवरनारनू काणे· कूडलसंगन शरणरल्लि अम्बलिय नेमदात मादार चन्नय्य ॥ ८ ॥

पयस्तु केचिद्व्रतयन्ति लोके मण्डं तु केचित्परमान्नमेव ।
नवोद्धृतं केचिदुपाश्रयन्ति तथैव चैके गुडमेकमेव ॥
सर्वे वसन्त्यत्र तथा न कोऽपि यथोपयुञ्जीत नरो यवागूम् ।
मादारनामा गुरुभक्त एकः भुङ्क्ते यवागूं नियमेन देव ॥

Some offer You milk ; some offer You curds ; some offer You butter ; some offer You

sweets. Nobody offers You bare gruel except the sincere devotee, Madara Channaiah.

एवं मादारचन्नय्यनामा शरणः सर्वैरपि तुच्छतया निराकृतां यवागूमेव भक्त्या परमात्मने समर्पयन् तामेव प्रसादभावनया भुञ्जान आसीत् । एवं भक्तः यथालाभसन्तुष्टः यथाकालं धर्मतो लब्धं यत्किञ्चिदपि भोग्यवस्तु तदानीमेव भगवते समर्प्य तेनैव सह सुखेन वसति स्म । अर्पणार्थं यत्किञ्चिदप्यधिकं वस्तु सः परमात्मनः सकाशात् नापैक्षत । तादृशं याचनमेव महापापमिति तस्य भावना आसीत् । तदेवात्र विवृणोति । तद्यथा--

अय्या ! निन्मल्लि आयुव बेडुवेने ? संसारक्कञ्जुवेनय्य ! निम्मल्लि श्रीय बेडुवेने ? पराङ्गनेय पाप ! अय्या ! निम्मल्लि मुक्तिय बेडुवेने ? अदु निम्म पदवि· सकळेश्वरदेव ! नानेनुव-नोल्ले, निम्म शरणर सङ्गवुळ्ळरे साकु ॥ ९ ॥

आयुः कथं त्वां चिरमद्य याचे यतो हि भीतोऽस्मि भवादमुष्मात् ।
तथार्थये त्वां श्रियमद्य वा कथं यतोऽन्यनारीपरिदूषकः स्याम् ॥
विमुक्तिमिच्छामि कथं त्वयेश यतश्च सा त्वत्पदमेव नित्यम् ।
न किञ्चिदिच्छामि भवत्पदाश्रितान् विना शरण्यान् शरणांश्च देव ॥

O Lord ! I don't seek from You the length of life as it leads to unhappy births and deaths. I don't ask You for wealth, as that might lead

to lustful enjoyment. I don't ask You for salvation because that is Your requisite. I only seek to serve You and Your Sharanas.

सर्वार्पणभावेन शुद्धो भक्तः नित्यजीवने स्वेन अनुभूयमानं सत्परिणामं लोककल्याणायैवं निरूपयति—

आरादरू निम्म नेनेवरय्य, ना निम्म नेनेवनल्ल. अदेनु कारणवेन्दडे, एन्न नेनेव मनवे निवे आदिरागि. आरादरू निम्म पूजिसुवरय्य, ना निम्म पूजिसुवनल्ल. अदेनु कारणवेन्दडे, एन्न तनुविङ्ग नीवे पूजेयादिरागि. आरादरू निमगर्पिसुवरय्य, ना निमगर्पिसुवनल्ल. अदेनु कारणवेन्दडे, एन्न सर्वाङ्गवेल्लवू निमगर्पितवायित्तागि. इदु कारण, 'भक्तदेहिक देव, देवदेहिक भक्त' एंब श्रुतियनरिदु, निम्म मुट्टि नानु अभिन्ननादे काणा कूडल संगमदेव ॥ १० ॥

ध्यायेच्च यः कोऽपि भवन्तमद्य तथाप्यहं त्वां न विचिन्तयेयम् ।
यतो मदीयं हि मनस्त्वमेव यः कोऽपि नित्यं हि समर्चयेत्त्वाम् ॥
तथाप्यहं त्वां न समर्चयेयम् यतो मदङ्गं त्वयि सर्वमर्पितम् ।
यः कोऽपि किञ्चित्फलमर्पयेत्ते नाहं तु तादृक् फलमर्पयेयम् ॥
यतो मदीयं न हि किञ्चिदस्ति त्वमेव सर्वं गुरुसङ्गमार्य ।
भक्तस्य देवस्य च नास्ति भेद इत्यर्थकं वेदमवेत्य नित्यम् ॥
संस्पृश्य देवं हृदये वसन्तं त्वभिन्नतां प्राप्य इहैव लोके ।

Anybody else may remember You, but I won't; because my mind is Yourself. Anybody else may worship You; but I won't; because You are Yourself a source of worship to my body. Others may offer things to You, but I won't; because the whole of my body is offered to You. Knowing the truth that the devotee is part and parcel of God and God is part of devotee, I have become one with You.

तनु निम्म रूपाद् बळिक आरिगे माडुवे? मन निम्म रूपाद् बळिक आर नेनेवे? प्राण निम्म रूपाद् बळिक आरनाराधिसुवे? अरिवु निम्मल्लि स्वयवाद् बळिक आरनरिवे? चन्नमल्लिकार्जुनय्य। निम्मिन्द् नीवेयदिरागि, निम्मने अरिवुतिर्देनु॥

तवैव देहत्वमनुप्रपन्नः कुर्यां हि सेवामहमत्र कस्मै?।
चित्ते मदीये त्वदभिन्नतां गते कं वा स्मरेयं ननु मल्लिकार्जुन॥
प्राणे मदीये त्वदभिन्नतां गते कमर्चयेऽहं ननु देवदेव?।
त्वय्येव जीवात्मकतामुपेते त्वामेव जानामि न च त्वदन्यम्॥

When my body is Yourself, when my mind is yourself, when life itself is yourself, when my conscience is harmoniously blended with yourself, whom am I to realise? O Lord Channamallikarjuna! When You have become myself, I go on realising Yourself.

एवं भक्तः आत्मीयतया परमात्मानं समर्च्य तादृश्यैव सद्भावनया स्वकीयं भोग्यं सर्वमपि वस्तु तस्मै समर्प्य तस्मिन् संपूर्णतया विलीयते। सः भगवदंशत्वात् तदीयो भूत्वा तद्गतशक्ति-सङ्कोचं परिहृत्य शक्तिविकासमधिगन्तुं तदुपासनायां निरतो भवति। एतादृश्या: उपासनया अंशः अंशिनि विलयङ्गन्तुं प्रभवति। अत एवेयमुपासना अहंग्रहोपासनेति कथ्यते। अहं परमात्मनोऽशः इति ग्रहो ज्ञानमत्रापेक्ष्यते। एतदृशं ज्ञानमेवात्रोपसनायां आधारः। अतोऽनयोपासनया अंशस्य मूलभूते अंशिनि सामरस्यं सहजतया संभवति। अर्चनया एतत्सामरस्यमधिगतमपि अर्पणेनैव स्थिरीक्रियते। भक्तः परमात्मने किमर्पयेदित्यंशं स्वयमेव यदि विचारयेत् तदा सः स्पष्टं जानाति। देहं प्राणं मनो बुद्धिमिन्द्रियाण्यपि परमात्मरूपतयैव परिणतानि सः पश्यति। अतः सः स्वस्य परमात्मना अभेदमनुभवितुं शक्नोति। एवं जीवन्नेव सः तदीयां बुद्धिं स्मृतिं विस्मृतिं एवं सर्वमपि भगवद्रूपतयैव भावयति। तथा च भक्त एव परमात्मनो देहः प्राणश्च संपद्यते। अतः स एव भक्तस्य मनः पावयित्वा तत्र शाश्वतिकतया वसन् तदनुभवगोचरो भवति। एवं परमात्मा स्वयमेव स्वसन्तोषाय भक्ते प्रसीदतीत्याह—

अय्या! एळेगरु तायनगलि बल्लुवन्ते ना निम्मनरसि बल्लुत्तिद्देने· अय्या! नीवेन्न मनक्के प्रसन्नव माडि कारुण्यव माडिरय्य· नीनेन्न मनक्के नेलेवनेयागि कारुण्यव माडु. नीनिल्लदिरलु लेसनीयय्य एम्बे कूडलसंगमदेव ॥ १२ ॥

वत्सो यथा म्लायति धेनुमार्गणात् तथा भवन्मार्गणतो विषण्णः ।
त्वमेव तावन्मम चित्तशुद्धिं विधाय भृत्ये सदनुग्रहो भव ॥

As the calf pines in search of its mother, I am pining in search of you. Be merciful and show me your presence. Let my mind find succour in You.

एनगे निम्म नेनहादागळे उदय. एनगे निम्म पादमरहादागळे अस्तमान. निम्म नेनहवे जीवाळ. एनगे निम्म नेनहवे प्राण काणा स्वामि. एन्न हृदयदल्लि निम्म चरणद उण्डिगेयनोत्तय्य. एन्न वदनदल्लि षडक्षरिय बरेयय्य, कूडलसंगमदेव ॥ ९३ ॥

ममोदयस्त्वत्स्मृतिसंभव : स्यात्तथैव चास्तं तव विस्मृतेर्नु ।
तव स्मृतिं सारतमं ब्रवीमि प्राणं तथा त्वत्स्मरणं हि मन्ये ॥
तथैव ते विस्मरणं भवेद्यदा तदैव मे भाग्यविपर्यय : स्यात् ।
मुद्रापय श्रीचरणं हृदब्जे षडक्षरं लेखय भृत्यवक्त्रे ॥

My daybreak is when I remember you. When I forget you is night to me. You are the crux of my life. Imprint on my heart your gracious feet and inscribe on my tongue the sacred mantram.

एवं च भक्तः जीवने परमात्मस्मरणचिन्तनादिकमेव प्रधानतया निर्वहन् तत्प्रियः संपद्यते । यस्मै कस्मैचिदपि तेनार्पितं

सर्वमेव वस्तु तदन्तर्यामिणे परमात्मन एव अर्पितमिति सः जानाति। एतादृशेनार्पणेन भक्तः भवरहितो निर्मलस्सन् शिवः संपद्यते। अयमाशयोऽत्रैवं निरूप्यते—

शिवकथेगळ केळि केळि सन्तोषिसि, शिवकीर्तनेगळ माडि माडि, दणुविल्लदे शिवन नेनेदु नेनेदु, शिवसेवेय माडुत्त, शिवपूजेयनोजेयल्लि विस्तरिसि, शिव शरणेन्दु शिवनोडवेय शिवनवरिगर्पिसि, शिवने तानाद भवरहितभक्तन नोडा, निजगुरु-स्वतन्त्रसिद्धलिङ्गेश्वर ॥ १४ ॥

सन्तुष्टवार्ताश्रवणेन शंभोस्तथैव कृत्वा शिवकीर्तनं च।
तथा विचिन्त्यैव विना श्रमेण तथैव कुर्वंश्च तदीयसेवाम् ॥
विस्तीर्य पूजांश्च यथोक्तरीत्या स्वतन्त्रमूर्तें गुरुसिद्धलिङ्ग।
शिवं शरण्यं ह्यनुचिन्त्य नित्यं तदीयवस्तूनि तदीयवर्गे ॥
समर्प्य भक्त्या भवदेकनिष्ठः शिवः स्वयंभूत इहैव भक्तः।

Revelling in Shivakathas, busily engaged in Shivakirtanas, tireless in remembering Shiva, rendering service to Shiva, abundantly worshipping Istalingam, dedicating myself to Shiva completely I have become one with Him.

एवं स्वस्मिन् विद्यमानानि सौकर्याणि सर्वाण्यपि तदा तदा गृहमागतेभ्यः एव शिवभावनया समर्प्य सर्वदा सर्वेन्द्रियेभ्यः शिव-

कथाश्रवणमेव कुर्वन् भक्तः निराकारे परमेश्वरे भ्रमर इव यथा मग्नो भवेत् तादृशं प्रकारं निरूपयति । तद्यथा—

वचनदल्लि नामामृत तुम्बि, नयनदल्लि मूरुति तुम्बि मनदल्लि निम्म नेनहु तुम्बि, किविगल्लि निम्म कीर्तियु तुम्बि कूडलसंगमदेव! निम्म चरणकमलदोळु सोगद वण्डनुम्ब तुंबियागिर्पेनु ॥ १५ ॥

आपूर्य नामामृतमेव सूक्तौ नेत्रे समापूर्य तदीयमूर्तिम् ।
चित्ते समापूर्य तदीयसंस्कृतिं श्रोत्रे समापूर्य तदीयकीर्तिम् ॥
तथा द्विरेफोऽस्मि भवत्पदाब्जनिष्यन्दमग्नो गुरुसंगमार्य ।

With your name in my mouth, with your form in my eyes, with your memory in my mind, with your praise filling my ears, O God! Let me be a bee hovering about your feet and sucking nectar.

भक्तो यथा अर्चनावसरे आत्मानं सदा परीक्षते अर्पणावसरेऽपि सः आत्मपरीक्षायां निरत एव भवेदित्याह—

मनमन बेरसिदल्लि तनु करगदिद्दरे, सोङ्किनल्लि पुळकङ्गळु होरहोम्मदिर्दोडे कङ्गळश्रुजलङ्गळु सुरियदिर्दडे, नुडिवल्लि गद्गदंगळु होरहोम्मदिर्दोडे कूडलसंगमदेवर भक्तिगिदे चिन्ह एन्नल्लि इल्लवागि आनु डांभिक काणिरे ॥ १६ ॥

देहः कृशो नैव भवेद्यदा तु समष्टिभावे मनसोर्द्वयोश्च ।
रोमोद्गमो नैव यदा स्फुरेत्तु स्पर्शान्मिथो वारि पतेन्न नेत्रयोः ॥
उक्तौ न दृश्येत हि गद्गदस्वरः संगार्यभक्तेरिदमेव चिह्नम् ।
यतो न दृष्टं मयि सर्वमेतत् ततो ह्यहं डांभिकवेषधारी ॥

If my body does not melt when my mind dwells in God ; if my hairs do not stand erect at His touch ; if my eyes do not shed tears of joy and if my voice does not become feeble with emotion, I am merely a boaster and not a genuine devotee. One who does not possess these indications during worship and offering ceases to be a Bhakta.

भक्तस्य सर्वार्पणभाव एवं हृदयङ्गमया रीत्या वर्ण्यते—

तन्दे नीनु ; तायि नीनु ; बन्धु नीनु ; बळग नीनु. नीवल्लदे मत्तारू इल्ल. कूडलसंगमदेव ! हालल्लद्दु नीरल्लद्दु ॥ १७ ॥

त्वमेव माता च पिता त्वमेव वन्धुस्त्वमेवसि तयैव मित्रम् ।
विना भवन्तं न च मेऽस्ति कश्चित् सङ्गार्यदेव शृणुताद्वचो मे ॥
यथैव रोचेत तथा कुरुष्व दुग्धेऽथवा वारिणि निक्षिप त्वम् ।

You are my father, my mother, my far and near relative. Apart from You, I have none. You may plunge me either in milk or in water. You may make or mar me as You like. Thus, I surrender myself to you.

भक्तस्य अर्पणप्रकारः पुनर्विविच्य निर्दिश्यते। तद्यथा--

धन सवेदरे तनुवनर्पिसुवेनु. तनु सवेदरे मनवनर्पिसुवेनु. मन सवेदरे भाववनर्पिसुवेनु· भाव सवेदरे निर्भाववनर्पिसुवेनु. कूडलसङ्गमदेव! निम्म तेत्तिगनाद बळिक निम्मल्लि कूडि अर्पिसि शुद्धनप्पेनय्य ॥ १८ ॥

यदास्मि सद्भक्तसहासिकां गतस्तदैव युष्मत्परिचर्ययाहम् ।
अवाप्य शुद्धिं तत उत्तराप्यं वित्तस्य कार्श्यं समुपैमि सत्यम् ॥
वित्ते कृशे कायमिहार्पयेयं काये कृशे चित्तमिहार्पयेयम् ।
चित्ते कृशे भावमिहार्पयेयं भावेऽर्पिते केवलतां भजेयम् ॥

If my wealth is exhausted by offering to you, I shall offer my body to your service. If my body is exhausted, I shall offer you my mind. If my body is also exhausted by thinking of you, I shall offer you my being. If my being is also exhausted, I shall offer my non-being. Being thus your dependent, I remain united in you and become pure by offering myself to you completely.

हुलिय बायल्लि सिक्किद हुल्लेयन्ते, सर्पन बायल्लि सिक्किद कप्पेयंते, सकललोकादिलोकङ्गळु मायेय बलेयल्लि सिक्कि मरेयहोगुवुद कण्डु नानु अञ्जि निम्म मरेहोक्केनु कायय्य कारुण्यनिधिये अखण्डेश ॥ १९ ॥

व्याघ्रास्यसंसक्तमृगो यथैव यथैव भेको भुजगास्यलग्नः ।
तथैव मायामृगबन्धिनीसितान् समीक्ष्य भीतः शरणं प्रपद्ये ॥
अतस्त्वमेवार्हसि रक्षितुं मामखण्डदेवाद्य दयां निधेहि ।

Like a fawn which is seized by the tiger, like a frog which is caught by the snake, the universe is caught in your mysterious net called Maya. By looking at it, I am frightened and humbly invoke your protection.

आनु भक्तनल्लय्य, आनु वेषधारियय्य. कटुक, केत्तुग कोल्लुगनेम्बुदु नन्न हेसरय्य, कूडलसंगमदेव! निम्म शरणर मनेय मग नानय्य ॥ २० ॥

अहं न भक्तोऽपि तु वेषधारी संहारकेत्यादि च नामवानहम् ।
यथा भवेयं शरणस्य पुत्रस्तथानुगृह्णातु भवानजस्रम् ॥

I am quite unworthy to be a true devotee. I am a butcher, scavenger and hangman. Still I request you kindly to consider me as a child of your Sharanas.

सिंहद मुन्दे जिगिदाटवे ? सूर्यन मुन्दे कीटदाटवे ? प्रळयाग्निय मुन्दे पतंगदाटवे ? निम्म मुन्दे एन्नाटवे कलिदेवरदेव ॥ २१ ॥

पुरस्तु सिंहस्य पराक्रमस्ते किं शोभते मानव चिन्तय त्वम् ? ।
भानोः पुरस्तात्किमु कीटलीला ? संवर्तकाग्रे किमु पक्षिलीला ? ॥
भवत्पदाग्रे कलिदेवदेव किं शोभते क्रीडितमस्मदीयम् ? ।

Can a lamb face a lion ? Can a moth face the fire ? Can a worm face the sun ? How Can I face you, O Lord Kalidevadeva !

यतोऽहं भवत्प्रसादं स्वयमेवाधिगन्तुं न प्रभवामि ततस्त्वमेव दयया भृत्यं मां यया कयापि परीक्षया उत्तीर्णयस्वेत्याह--

हर तन्न भक्तर तिरिवन्ते माडुव ; ओरेदु नोडुव सुवर्णद चिन्नदन्ते, अरेदु नोडुव चन्दनदन्ते, अरिदु नोडुव कब्बिन कोलिनन्ते. बेदरदे बेच्चदे इद्दरे करविडिदेत्तिकोम्ब रामनाथ ॥२२॥

हरस्तु भक्तानटने नियोजयेत् सुवर्णपाषाणकषे समुल्लिखेत् ।
तथैव पिंष्याद्धरिचन्दनं यथा तथैव मृद्यात्पुनरिक्षुदण्डवत् ॥
य एव भीतो न भवेत्कदापि तं रामनाथस्तु करेण धत्ते ।

God examines His devotees with several trials as one examines gold with the pumice stone, sandalwood by pasting and sugarcane by twisting. If you stand the test bravely, He, our Lord Ramanatha will raise you to Heaven.

यतः परमात्मा सर्वदा अस्मान् परीक्षमाणो वर्तते ततस्त्वं परमात्मानं प्राणभावनयैव समर्च्य तस्मै यद्यात्मार्पणपूर्वकं सेवा समर्प्येत तदैव तदनुग्रहो लभ्येतेत्याह—

ओलविल्लद पूजे ; नेहविल्लद माट ! आ पूजेयु आ माटवु

चित्रद रूहु काणिरण्ण; चित्रद कब्बु काणिरण्ण. अप्पिदरे सुखविल्लु; मेल्लिदरे सुखविल्ल. कूडलसंगमदेव निजविल्लदवन भक्ति ॥ २३ ॥

यथैव चित्रप्रतिमाङ्कपाल्या सञ्जायते नैव सुखं कदापि ।
यथैव चेक्षोः पटचित्रितस्य दंशाद्रसो न द्रवतीह तद्वत् ॥
निष्ठाविहीनस्य तु भक्तिरेषा संगस्य तुष्ट्यै न भवेत्कदापि ।

Indifferent worship and unwelcome offering are quite unsatisfactory. They are merely a show like a painted picture without life. Thus worship offered with no devotion does not please Lord Sangama.

एन्न तनुविंगे नीनोडेय. एन्न मनक्केयु नीनोडेय. एन्न धनक्केयु नीनोडेयनाद बळिक एन्न अरिवु निन्नदु. एन्न मरहु निन्नदु. कूडलसंगमदेव! "भृत्यापराधे स्वामिनो दण्डः" एंबुद विचारिसि नोडा प्रभुवे ॥ २४ ॥

मदीयदेहस्य भवानधीशस्तथैव चित्तद्रविणादिकस्य ।
ज्ञानं मदीयं तव वश्यमेतन्मोहो मदीयोऽपि तवैव वश्यः ॥
इत्थं मदीयेष्वखिलेषु देव भावत्कतामप्युपयत्सु सत्सु ।
आगः समेयाद्यदि मय्यकस्मादाप्नोषि तस्यापि फलं त्वमेव ॥

O Lord Sangamadeva! You are master of my body. You are master of my mind. You

are master of my wealth. Then You are responsible for my commissions and omissions and hence as much liable as myself.

एन्न गुणावगुणाव संपादिसदिरय्य. निमगानु सरिये ? अप्रतिममहिम ! निमगानु सरिये ? कूडलसङ्गमदेव । नीवु माडलानादेनु एन्नोडने मुनिवरे एले तन्दे हेळा ? ॥ २५ ॥

भवान्गुरुर्मय्यगुणं गुणं वा दधातु यः स्याद्भवदासिदस्युः ।
नाहं भवद्भिः सदृशः कदाचित् भवेयमत्राप्रतिमस्वभाव ॥
एवं सति त्वं मयि कोपमद्य कर्तुं कथं युज्यत इत्यवेहि ।

Lord Sangama ! Do not examine my merits and defects. I am not your equal. You are supreme in all respects and can achieve anything. I am only a poor being of Your creation. Should You be angry with me ?

भवदीयपरीक्षायां यद्यहमनुत्तीर्णो भवेयं तदापि त्वमेव शरणं ममेति याचते भक्त इत्याह--

चन्दनव कडिदु कोरेदु तेदोडे नोन्देनेन्दु कम्प बिट्टिते ? तन्दु सुवर्णव कडिदोरेदोडे वेन्दु कळङ्क हिडिदित्ते ? सन्दु सन्दु कडिदु कब्बनु तन्दु गाणदलिक्कि वेन्दु पाकागुळ्ळ सक्करेयागि नोन्देनेन्दु सविय बिट्टित्ते ? ना हिन्दे माडिद हीनङ्गळेल्लव तन्दु

मुन्दिळुहलु निमगे हानिये ? एन्न तन्दे मल्लिकार्जुनदेवय्य कोन्दडे शरणेंबुद माणे ॥ २६ ॥

छेदे छेदे घर्षणे चन्दनद्रुः यं गन्धं किस्वीन्नु जह्यात्कदापि ? ।
तद्वद्रुक्मं छेदने शाणलेख्ये मूषातापे किन्नु विन्देत्कळङ्कम् ? ॥
इक्षुर्नीत्वा पर्वपर्व प्रलूनः यन्त्रे त्विक्षोः क्षिप्यते चेदिक्षुरेषः ।
पाकादग्नेः शर्कराभावमेत्य क्षीणो भुत्वा माधुरीं किन्नु जह्यात् ? ॥
जन्मान्तरे मत्कृतपापजातं त्वया पुरस्तान्मम चेन्निवेश्यते ।
हानिः किमु स्यात्तव मल्लिकार्जुन ! त्वया हतोऽपि प्रजहामि न त्वाम् ॥

If you cut sandalwood and paste it, does it feel hurt and lose its smell ? If you heat and melt gold in fire, does it become impure ? If you cut, crush and squeeze sugarcane, does it lose its sweetness ? All my faults if placed before You are no loss to You. Even if You punish me in all possible ways, I shall still surrender myself to You alone, my Father, Channamallikarjuna !

ज्योति मुट्टिद बत्तियेल्ल ज्योतियप्पुदय्य. सागरव मुट्टिद नदिगळेल्ल सागरवप्पुवय्य. प्रसादव मुट्टिद पदार्थवेल्ल प्रसादवप्पुदय्य. लिंगव मुट्टिद अंगवेल्ल लिंगवप्पुवय्य. सकळेश्वरदेव ! निम्म मुट्टिदवरेल्ल निम्मन्तप्परय्य ॥ २७ ॥

प्रभामिषङ्गत्खलु तत्स्वरूपतामुपैति वर्तिः परमार्थतस्तु ।
तथैव नद्यस्सरितां पतिं गतास्तदात्मतामभ्युपयन्ति सांप्रतम् ॥
भवत्प्रसादेन समेति यत्तु पदार्थजातं तदु ते प्रसादः ।
अंगाह्वयो निर्मल एष जीवः स्पृशन्हि लिंगात्मकतामुपैति ॥
स्पृष्ट्वा भवन्तं सकलेशदेव भवन्ति भक्ता हि भवत्स्वरूपाः ।

The wick connected with the flame becomes flame itself. The rivers coming into contact with the ocean become the ocean itself. All objects of enjoyment will be transformed as Prasada owing to the contact of God. The pure-minded individuals coming into contact with Linga become Linga Itself. Hence, Lord Sakalesha ! All those who touch you become yourself internally and externally.

तनुव बेडिदडीवे ! मनव बेडिदडीवे ! धनव बेडिदडीवे निम्म शरणरिगे. एनगे बेकेंब भाव मनदल्लिलि होळेदरे, घनमहिम! निम्म शरणर पाददाणे, मनवचनकायदल्लिल नीवल्लदे मत्तोन्द-नरिदोडे कूडलसंगमदेव ! मत्ते मरळि भववेम्ब घोरदल्लिक्कय्य ॥

तनुं मनश्चैव धनं च नित्यं ह्यवेक्षमाणः शरणा लभन्ते ।
तदस्तु मह्यं त्विति भाव एष उत्पाद्यते चेन्मम मानसे तदा ॥
त्वं वेत्सि नूनं हृदयं ममात्र त्वदेकनिष्ठाः शरणाः प्रमाणम् ।
विना भवन्तं वचनेऽथ काये तथैव चित्ते यदि भाव्यतेऽन्यः ॥

तदा गुरुः कूडलसंगमार्यः मां निक्षिपत्येव हि घोरपाशे ।

If Sharanas ask me, I give everything like my body, mind and wealth. If the desire for anything enters my mind and if I seek anythig but you alone, you may throw me into the great whirlpool of Samasara.

अंगवन्नरिवन्नक्क शिवलिंगपूजेय माडले बेकुः आत्मन क्षुधेयुळ्ळन्नक्क वन्द पदार्थव लिंगार्पितव माडले बेकु. इदु अरिविन बित्तु· ज्ञानद गोत्तु, सर्वमयद युक्ति· ईशान्यमूर्ति मल्लिकार्जुनलिंगवनरिव शक्ति ॥ २९ ॥

स्वस्य स्वरूपं मनुते यदाङ्ग तावच्च लिङ्गं भुवि पूजयेत्खलु ।
आत्मक्षुधा यावदुदेति तावत्कुर्यात्पदार्थं शिवभोग्यमेव ॥
एतद्धि मूलं परमार्थबुद्धेरेतद्धि चिह्नं ननु युक्तिरेतत् ।
ईशान्यमूर्तिं गुरुमल्लिकार्जुनं जानाति यस्तस्य हि शक्तिरेतत् ।

Until one knows the nature of oneself, one should worship the Linga. As long as the thirst of the soul exists, one should worship the Linga and offer to It whatever he has possessed. This is the mark of learning. This is the indication of knowledge. This is the sign of all-pervasive nature. This is the means of Knowing Ishanya-murthy Mallikarjuna Linga.

एवमर्पणाचरणेऽपि साधकैर्विवेकिभिर्भाव्यमित्याह—

माडुवल्लि एन्न नानरिदु माडिदेनादडे, नीडुवल्लि एन्न नानरिदु नीडिदेनादडे, नीडुवल्लि रुचिगे मनवेळसि हारैसिदेनादडे निमगन्दे द्रोहवय्य. माडुवल्लि नीडुवल्लि शुद्धनल्लदिर्दडे नीनन्दे मूगु कोय्यि कूडलसंगमदेव ॥ ३० ॥

अहं करोमीति यदा विचिन्त्यते, तथार्पयामीति यदा विचिन्त्यते ।
तत्राभिलाषो यदि मे रुचौ स्यात् , तदा कृतं वञ्चनमित्यवैमि ॥
अशुद्धता चेत्करणे समर्पणे ज्ञायेत, शिक्षां कुरु मे तदैव ।

If I act with a selfish motive, if I give alms with a selfish intention, I would be cheating you. If I act or give charity without piety, You cut off my nose, O God Sangama!

पण्डितनागलि, मूर्खनागलि, सञ्चितकर्म उण्डल्लदे बिडदु. प्रारब्धकर्म भोगिसिदल्लदे बिडदु. नानाव लोकदोळगिद्दडेयू बिडदु. कर्मफलगूडि कूडलसंगमदेवंगे आत्मनैवेद्यव माडिदातने धन्यनय्य ॥ ३१ ॥

मूर्खोऽस्तु वा पण्डित एव वास्तु सर्वैरवश्यं कृतकर्म भोग्यम् ।
प्रारब्धमेतन्न विहन्यतेऽन्यथा तदेव बध्नाति च मां परत्र ॥
अतश्च नित्यं गुरुकूडलाये ह्यात्मार्पणं यः कुरुते फलेन ।
स एव धन्यो भवतीह तस्मिन्प्रसन्नतामेति तदिष्टलिंगम् ॥

Whether one is learned or unlearned, one has to expiate one's Karma. One's own Karma can never end unless it is actually experienced by oneself wherever he resides. One who surrenders himself along with his Karma to God is fortunate indeed.

अन्नवनिक्किदडेनु? पुण्यवहुदु. वस्त्रव कोट्टडेनु? पुण्यवहुदु. हणव कोट्टडेनु? पुण्यवहुदु. आयाय फलपदद संपत्तहुदय्य? कूडलचन्नसंगमदेव ॥ ३२ ॥

अन्नप्रदानेन किमाप्यते नरैः किञ्चिच्च पुण्यं भवितेह लोके ।
वस्त्रप्रदानेन किमाप्यते नरै किञ्चिच्च पुण्यं भवितेह लोके ॥
द्रव्यप्रदानेन किमाप्यते नरैः किञ्चिच्च पुण्यं भवितेह लोके ।
तथापि तत्कर्मफलस्य भोगात् कर्तात्र जन्म प्रलभेत नित्यम् ॥

If you give food to others with love and kindness, it secures you merit. If you give clothing similarly, it secures you merit. Each act has its own measure of merit, to enjoy which you have to be born again.

फलपदादिगळ भक्तरिगे कोट्टिहेनेंबे. अवरदनोल्लरु. अवरु निनगे निन्न रूपिङ्गे तनुमनधनगळ कोडुवरु. एले वञ्चकनाद शिवने! निर्वञ्चकरेम्मवरु. निन्ननेन बेडुवरु. नीनेनवरिगे? कोडुवे. निन्न कुडनेम्मवरु ओल्लरु कुड कोडदे होगु कपिलसिद्धमल्लिकार्जुन! ॥

फलादिकं भक्तचयाय दत्तमितीरयन्वै क्षिपसीह कालम् ।
त्वद्दत्तमेतत्फलजातमत्र नैव प्रतीच्छन्ति भवत्सुभक्ताः ॥
त्वदीयरूपाय च तुभ्यमेव प्रदातुमिच्छन्ति धनादिकं ते ।
अतोऽसि नो वञ्चक एव देव निर्वञ्चनास्ते भवदीयभक्ताः ॥
पृच्छन्ति ते किं भवतस्सकाशात् त्वयापि किं दीयत एव तेभ्यः ।
त्वद्दत्तमेते नहि साभिलाषं ग्रहीतुमिच्छन्ति ददातु नो भवान् ॥

Lord Kapilasidda Mallikarjuna ! You may bless the devotees with worldly states and plenty of profits ; but they don't request them heartily as they are satisfied with their lot. They have voluntarily offered their body and soul to You and want nothing from You. What can you give them ?

एवं शिवर्पणबुद्ध्या व्यवहरन्तः शरणाः स्वयं निस्पृहाः नित्यतृप्ताश्च सन्तः शिवादपि न किञ्चिद्याचन्ते । स्वकीयं प्राक्तनं कर्म शिवार्पणधिया स्वयं विनश्यतीति ते दृढं विश्वसन्ति । सर्वमपि कर्म शिव एव यदि समर्प्येत तदैव जन्म सार्थकं भवेदिति तेषमाशयः ॥

शिवः भक्तवत्सलस्सन् दयया तदीयभृत्यमुद्धर्तुं स्वयमेव तमुपागच्छतीत्याह—

अडवियल्लिर्द गोवु मनेयल्लिर्द करुविगे चिन्तिसि बन्दु हाल नीडि मोहव माडुवुदल्लदे आ करुवेत्त वल्लदय्य ? नानु कर्मदेह-

विडिदु परिभवदल्लि तोळलुत्तिरलु, नीनु दयेहुट्टि, एन्न मरवेय संसारमं तोलगिसि करुणदिन्द सलहवेकेम्ब चिन्ते निनगल्लदे नानेन बल्लेनय्य, अखण्डेश्वर ॥ ३४ ॥

धेनुश्चरन्ती वनमार्ग एव गृहस्थवत्सं ननु चिन्तयन्ती ।
स्वयं समागम्य पयश्च दत्त्वा मोहं करोत्येव न वेत्ति वत्सः ॥
कर्मागतं देहमिमं च लब्ध्वा संसारभीत्या मयि दुःखितायाम् ।
दयानुग्राह्येति विचार एषस्त्वदीय एवाद्य किमत्र कुर्वे ॥

O Lord Akhandesha ! The cow, gone to graze in the forest remembers its young one at home and returns of its own accord to suckle. The young calf cannot go to it. Similarly, when I am drowning in the ocean of samsara, You must yourself come and save me. I cannot reach you for aid.

महाशरणा अक्कमहादेवी स्वीयार्पणविधानमत्र निरूपयति—

नच्चुगे मन निम्मल्लि. मेच्चुगे मन निम्मल्लि· सलहुगे मन निम्मल्लि· अळलुगे मन निम्मल्लि· बळलुगे मन निम्मल्लि· करगुगे मन निम्मल्लि· कोरगुगे मन निम्मल्लि. एन्न पञ्चेन्द्रियङ्गळु कप्पुर उण्ड उरियन्ते निम्मल्लि बेरसुगे चन्नमल्लिकार्जुनय्य ॥ ३५ ॥

मच्चित्तमेतत्त्वयि सक्तमस्तु त्वय्येव विश्वासमुपैतु नित्यम् ।
तथैव संरक्षणमाप्नुतात्त्वयि तथैव रुद्ध्याद्भवदर्थमेव ॥

त्वच्चिन्तया खेदमुपैतु नित्यं कार्श्यं समाप्नोतु मनस्त्वयीह ।
दैन्यं समाप्नोतु मदीयचित्तं संसर्गतस्ते गुरुमल्लिकार्जुन ॥
कर्पूरवर्त्यर्चिरिवेन्द्रियाणि त्वय्येव साङ्कर्यमवाप्नुवन्तु ।

In all its phases, in all its acts, let my mind be merged in You. Let my five organs of sense become merged in you like camphor which is set alight.

मरगिडवल्लि धान्यङ्गळ बेळसेल्लव तरितरिदु प्राणव कोन्दुण्डु शरीरव होरेव दोषक्के एनगिन्नावुदय्य विधि? ओन्दिन्द्रिय मोदलागि ऐदिन्द्रिय कडेयाद चराचरवेल्ल जीवजालवल्लवे? अदुकारण कूडलसङ्गन शरणरु लिंगकर्पिसि प्रसादव कोण्डु निर्दोषिगळागि बदुकिदरु ॥ ३६ ॥

द्रुमक्षुपादेः फलमूलजातं धान्यादिकं चाप्यपचीय लोभात् ।
प्राणान्परित्याजयतो नरस्य दोषस्समेत्यत्र हि को विधिः स्यात्? ॥
हृषीकमेकं परिगृह्य जन्म प्राप्तान्यथ द्विप्रभृतीन्द्रियाणि ।
पञ्चेन्द्रियान्तानि चराचराणि जीवात्मकान्येव खलु श्रुतानि ॥
तस्मात्प्रपन्नास्तु समग्रभोग्यं लिंगे समर्प्याथ तदीयभोगात् ।
निर्दोषिणः सौख्ययुताश्च जातास्तस्मिन्प्रमाणं गुरुसंगमेशः ॥

कुलस्वामि ! निन्निद हेज्जेयल्लदे नानोंदु हेज्जेयनिडेनय्य. एनगोंदु हेज्जेयिल्ल· निन्न हेज्जे एन्न हेज्जे ओंदाद भेदव जगद न्यायिगळेत्त बल्लरै रामनाथ ॥ ३७ ॥

कुलाधिप त्वच्चरणं विनाहं न निक्षिपाम्येव पदं कदापि ।
न कोऽपि पादोऽस्ति मदर्थमेव भवत्पदं मत्पदमेकमेव ॥
न दृश्यते तत्र च भेदलेशः कथं जना न्यायविदो विदुस्तत् ।

O my Lord Ramanatha ! I cannot take one step unless You lead me with Your steps. My steps and Your steps are blended together. That they are one, evil men can hardly realise.

निम्मिदलानादेनु ; एनगे देहेन्द्रियमःप्राणादिगळादवु. आ देहेन्द्रियमनःप्राणादिगळिगे कर्तनु नीने· अवर आगु होगु सुख दुःख एल्लवु नीने· ओळगे नीने होरगे नीने· नानेंबुदु नडुवण भ्रांतु· निन्न विनोद नीने बल्ले ॥ ३८ ॥

भवद्भिरेवाहमुपागतोऽस्मि तथैव देहादिगतिस्त्वयैव ।
तेषां च कर्ता भवसि त्वमेव तदा गतं दुःखसुखादिकं च ॥
सर्वं त्वमेवांतरसि त्वमेव तथैव बाह्येऽपि त्वमेव देव ।
अहंममेति भ्रम एष मध्ये त्वमेव जानासि भवद्विनोदम् ॥

I am formed by You· My body, sense, mind and life are what You have bestowed on

me. My happiness or misery are Yours. You are inside and outside. To think that I am different from You is due to ignorance.

भक्तः सर्वार्पणभावेन शुद्धः स्वभोग्यं सर्वमपि प्रसाद-भावनया उपयुङ्क्ते। प्रसादसेवनकाले ये आगच्छन्ति तेभ्योऽपि यत्किञ्चिद्दत्त्वा अवशिष्टमेव स्वयं भुङ्क्ते । स्वोदरपूरणात्मिका तु दृष्टिस्तस्मिन्न वर्तते । परहितार्थमेव सर्वात्मभावेन आत्मीयतया सर्वान् प्रीणयन्नेव सः जीवति । तद्यथा—

कागेयोंदु अगळ कण्डरे करेयदे तन्न बळगवेल्लवनु? कोळियोंदु गुटुक कण्डरे करेयदे तन्न कुलवेल्लवनु? शिवभक्तनागि भक्तिपक्षविल्लदिद्दरे कागेकोळियिंद कर कष्ट कूडलसंगमदेव ॥

काको हि पश्येद्यदि किञ्चिदन्नं किं नाह्वयत्येष सजातिवृंदम्?।
संवीक्षते चेत्तृणमेकमेव किं नाह्वयत्यात्मकुलं हि कुक्कुटः? ॥
शिव त्वदावर्जितभक्तशेषं भक्तो न चेद्यच्छति सन्निधात्रे ।
काकान्निकृष्टश्चरणायुधाच्च विगर्ह्यते कूडलसंगमार्य ॥

When a crow catches sight of an eatable, it offers invitation to all the crows nearabout. When a hen finds a few pieces of grains, it shares them with its brood of chickens. If Your devotee receives some prasadam from You, and fails to share it with his neighbours

O Lord Sangama! he would be lower than crow and hen in estimation.

आशेगे सत्तुदु कोटि· आमिषक्के सत्तुदु कोटि. होन्नु हेण्णु मण्णिङ्गे सत्तुदु कोटि· अत्तित्त हरियदे निनगागि सत्तवरनारनू काणे गुहेश्वर ॥ ४० ॥

आशानिबद्धाः शतशो मृताः पुरा तथैव चान्नात्खलु कोटिशो मृताः ।
नितंबिनीस्वर्णभुवां कृते मृतास्सहस्रशस्ते भवरोगपीडिताः ॥
विचार्यमाणे बहुधा गुहेश्वर त्वदर्थमेकोऽपि मृतो न दृश्यते ।

People have died in hundreds in pursuit of worldly pteasures. Thousands have died as victims of gold, woman and earth. Thousands have died in search of the day-to-day necessities. I know of none who has given up his life for your sake, Lord Guheswara!

———

## कायकपद्धतिः

साधकः प्रातरुत्थाय स्नानादिना शुचिर्भूत्वा भगवदर्चनां विधाय स्वकीयं भोग्यवस्तुजातं भगवते: समर्प्य प्रसादसेवनेन नित्यकर्मनिर्वाहाय समुद्युक्तो भवेदिति शरणा अपेक्षन्ते । सर्वेऽपि व्यावहारिकाः एवमेव सूर्योदयसमये अर्चनां अर्पणं च परिसमाप्य

स्वीयोद्योगे निरता भवेयुः ; प्रतिदिनमेवमेव सूर्योदयात् सूर्यास्तमय-पर्यन्तं मानवाः स्वकर्तव्यनिरता भवेयुर्यदि तदा तेषु दारिद्र्यस्य गन्धोऽपि न विद्यते। भाग्यलक्ष्मीः तेषां गृहे ससन्तोषं निवसति। सूर्यो यथा फलापेक्षां विनैव लोककल्याणाय यथा जीवति तथा मानवाः परहितार्थं यदि जीवेयुस्तदा ते जन्मसार्थक्यं प्राप्नुयुः। एवं भवितुं व्यवहारः कथः निरूढः ? अयं प्रश्नोऽनायासेनोत्तरितः शरणैः तेषां दृष्टौ सर्वोऽपि व्यवहारः कायकभावनया निरूढः। किं तत्कायकम् ? को वाऽस्य महिमा ? अयमंश एवं विविच्य प्रदर्श्यते शरणैः—

कृषिकृत्य कायकदिन्दादडेनु. तनुमन बळलिसि तन्दु दासोहव माडुव परमसद्भक्तन पादव तोरय्य एनगे. अदेन्तेने आतन तनु शुद्ध ; आतन मन शुद्ध. आतन नडे शुद्ध, नुडियेल्ल पावनवु. आतंगे उपदेशव माडिदातने परमसद्गुरु. अन्तप्प सद्भक्तन मनेय कैलासवेंदु होक्कु लिङ्गार्चनेय माडुव जङ्गमने जगत्पावन. इन्तप्पवर नानु नेरे नंबि नमो नमो एम्बेनय्य कूडलसङ्गमदेव ॥ १ ॥

कृषिस्तदा कायकतामुपैति यदा तु सद्भक्तसमाश्रिता स्यात् ।
यदा गुरूणां चरजङ्गमानां सेवार्थमेवोपनिबध्यते चेत् ॥
देहं मनश्चैव निपीड्य धर्मादाहृत्य किञ्चित्तत एव सेवाम् ।
समाचरेद्यः परमस्स भक्तस्तदीयपादोऽस्तु मदीयमस्तके ॥

तदीयवाक्यं परमं पवित्रं तथा च तद्दर्शनमेव शुद्धम् ।
तस्मै च यस्तत्त्वमुपादिदेश स एव दिव्यो गुरुरित्यवैमि ॥
एतादृशं भक्तगृहं च केवलं कैलास एवेति विचिन्त्य जङ्गमः ।
लिङ्गार्चनं तत्र समाचरेच्चेत् स वंदनीयो जगदेकपावनः ॥
विश्वस्य चैतादृशजङ्गमं हि तस्मै प्रणामं विदधामि देव ।

Let agriculture and all other physical labour be undertaken as Kayaka which is held as noble and dignified. (No work is mean or low if discharged in this spirit) O Lord Sangama! Kindly show me one whose physical and mental labours are directed to God. He is pure in heart, mind and body. His speech and action are pure. His teacher is held as Paramasadguru. The Jangama who enters such a person's house and worships his Istalinga is a holy man. Such men I adore respectfully.

बसवार्यः स्वकीयव्यवहारपद्धतिमेवं विवृणोति––

नानु आरम्भव माडुवेनय्य गुरुपूजेगेन्दु, नानु व्यवहारव माडुवेनय्य लिङ्गार्चनेगेन्दु. नानु परसेवेय माडुवेनय्य जङ्गम-दासोहक्कॆंदु. नानावाव कर्मङ्गळ माडिद्दरेयू आ कर्मफलभोगव नी कोडुवेयेम्बुद ना बल्लेनु, नी कोट्ट द्रव्यव निमगल्लदे मत्तोंद क्रियॆ माडेनु. निम्माणे कूडलसङ्गमदेव ॥ २ ॥

कृषिं हि कुर्यां गुरुपूजनार्थं लिंगार्चनार्थं व्यवहारमेव ।
कुर्यां च सेवां चरतोषणार्थं शिवप्रियं स्यान्मम जीवनं हि ॥
यावच्च कर्म क्रियतेऽद्य तत्फलं त्वयैव संपत्स्यत इत्यवैमि ।
त्वद्दत्तमर्थं गुरुसंगमार्य समर्पये तुभ्यमनन्यभक्त्या ॥
त्वामन्तरा नैव ददामि कस्मैचिदित्यवेत्यात्र वसामि तृप्तः ।

I till in order to worship Guru (but not merely to attend to the needs of my family). I strive in order to worship Linga. I seek employment in order to worship Jangamas. Whatever I do, I know that the fruits are just what you confer on me O Lard! My offerings to you are what You have favoured me kindly.

सत्यशुद्धकायकदिन्द बन्द द्रव्यदल्लि चित्त विच्छन्दवागिरबेकु. नेमद कूलि अन्दिन नित्यनेमदल्लि संदिरबेकु. नेमद कूलिय बिट्टु हेमदासेगे कामिसि द्रव्यव हिडिदरे ता माडुव सेवे नष्टवय्य, निन्नासेवेषद पाशक्के नीने होगु ॥ ३ ॥

सत्येन शुद्धेन च कायकेन यावद्धि वित्तं लभते मनुष्यः ।
चित्तं तु तावत्यनुषक्तमेव विच्छेदमेयान्न च वित्तलोभात् ॥
न कायकादभ्यधिकं त्वभीप्सेल्लभेत लभ्यं ननु कायकेन ।
व्यवस्थितात्कायकजाद्धनाच्च भिन्नं सुवर्णं यदि कांक्षतेऽज्ञः ॥
तदा विनश्येत्तु तदीयसेवा प्रत्याशया विन्दति पाशमेव ।

Only by the gains earned by honest labour should the mind reach contentment. The wages of the day should be in conformity with the labour, turned out on that day. To be greedy for the undeserved gains with less labour would lead only to misery.

एतादृशं पवित्रं कायकं भक्तैर्यथाचर्यते तथा गुरुलिङ्ग-जङ्गमैरप्याचर्यते । तेषामपि तदावश्यकता महती वर्तत इत्याह——

गुरुवादडू कायकदिन्दले जीवन्मुक्ति. लिङ्गवादडू कायक-दिंदले शिलेय कुल हरिवुदु. जंगमवादरू कायकदिंद वेषद पाश हरिवुदु. इदु चंदेश्वरलिंगद अरिवु ॥ ४ ॥

गुरोरपि स्यात्कायकतश्च मुक्तिः सत्त्वैकनिष्ठस्य दयामयस्य ।
तथैव लिंगस्य शिलादिदोषो निवर्तते कायकतश्च सत्यम् ॥
निर्लिप्तजीवस्य तु जंगमस्य वेषादिपाशो ह्रियते च कायक-त् ।
तत्त्वज्ञ एवं निरतो हि कायके भवेच्च चंदेश्वरलिंगमेव सः ।

It is from Kayaka or physical action that Guru attains salvation even while he is alive. It is from Kayaka that Linga will get rid of the defects available in stone before preparation. It is from Kayaka that Jangama gets rid of the possibility of being bound by the tie of affection during his worldly tour for the awakening of

the mob. Hence Kayaka (engagement) is the indication of the Knowledge of Lingam.

कायकद्वारा समार्जितमेव द्रव्यं गुरुलिंगजंगमेभ्यो यदि समर्प्येत तदैव जीवनं सुंदरं पावनं च स्यादित्याह—

कंदिसि, कुंदिसि, बंधिसि, नोयिसि, कण्डकण्डवर बेडि तंदु जंगमलिंगक्के माडिहेनेम्ब दंदुगद माटक्के लिंगनैवेद्य सल्लदु. तनु करगि मन बळलि बंद तेरदनुवनरिदु, संदिल्लदे संशयविल्लदे जंगमलिंगक्के माडुव दासोहवे माट. कारेयसोप्पादरू कायकदिंदले बंदुदु लिंगार्पितवल्लदे दुराशेयिंद बंदुदु अनर्पित. इदु कारण सत्यशुद्धकायकद नित्यद्रव्यवादरे चंदेश्वर लिंगक्के नैवेद्य संदित्तु केळिरय्य ॥ ५ ॥

उद्धृत्य संपीड्य परान्नरांस्तु संक्लेशलब्धं यदि जंगमाय ।
प्रदीयते यद्भवकातरेण न तत्समश्नाति य एष देवः ॥
कायस्य चित्तस्य च दण्डनाद्यत्संपादितं तत्तदवेत्य तुष्ट्या ।
यद्दीयते जंगमपुंगवाय तदेव तद्वश्यकरं ह्यवैमि ॥
सत्येन शुद्धेन च कायकेन समार्जितं यत्तुच्छमपीह सस्यम् ।
लिंगार्पितं चेत्सुसमर्पितं भवेत् तदा भवेत्तद्भवतः प्रसादः ॥
दुराशया यत्समुपार्ज्य चार्प्यते तथापि तन्नार्पितमेव जायते ।
अतश्च सत्येन च शुद्धवृत्त्या संपादितं कायकवस्तु नित्यम् ॥
चन्देशलिंगाय समर्प्यते चेत्तदैव नैवेद्यनिवेदनं भवेत् ।

To procure wealth in evil ways or beggary and offer it in worship of Linga is not propitious. What-ever You earn with greediness would be rejected by God even if offered. If with earnest bodily effort and sincere mental devotion, you make even a small offering like some vegetable to God, it will be highly appreciated by Him.

मन शुद्धविल्लदवंगे द्रव्यद बहतनवल्लदे, चित्तशुद्धनागि कायकव माडुवल्लि सद्भक्तंगे एत्त नोडिदडत्त लक्ष्मि तानागिप्पळु अमळेश्वरलिंगद सेवेयुळ्ळन्नक ॥ ६ ॥

चित्ते विशुद्धिर्यदि नास्ति पुंसि तस्यैव सर्वांशदरिद्रता स्यात् ।
तस्यैव चित्तं परिशुद्धिमेत्य स्यात्कायके संपदुपैति नित्यम् ॥
यावच्च सेवाममलेश्वरस्य करोति तावत्समुपैति लक्ष्मीः ।

Lakshmi does not come to one who is not pure in mind. The worshipper who is pure in body and mind will become Fortune's favourite. So long as one continues to serve God and Mystics one leads a happy and peaceful life.

कायकदल्लि निरतनादोडे गुरुदर्शनवादरू तोरेयवेकु ; लिंगपूजेयादरू मरेयवेकु ; जंगम मुन्दिद्दोडेयू हङ्गु हरियवेकु, कायकवे कैलासवाद कारण· अमळेश्वरलिंगवायितादरू कायकदोळगु ॥ ७ ॥

यदाश्रयेत्कायकमेव मानवः स विस्मरेत्सद्गुरुमप्युपागतम् ।
लिंगस्य पूजामपि विस्मरेत्तदा न लक्षयेच्चैव हि जंगमं तदा ॥
तत्कायकं पावनमित्युदीर्यते यतश्च कैवल्यपदं प्रकीर्तितम् ।
य एव लिंगं ह्यमलेश्वरो भवेत् जगद्धितार्थं स तु कायकं चरेत् ॥

To the devotee solely absorbed in kayaka, guru's presence, Linga's worship and Jangama's approach are all secondary. He should continuously practise his labour which is esteemed as Divine worship.

कृषिय माडि उण्णदे हसिवु हरिव परि इन्नेन्तो ? कर्मयोगव माडदे निर्मलसुचित्तवनरिव परि इन्नेन्तो ? वेयदे अशनवनुम्बुव ठावावुदु कपिलसिद्धमल्लिकार्जुन ॥ ८ ॥

कृत्वा कृषिं भुज्यत एव नो चेत् क्षुधापहारेऽस्ति निमित्तमन्यत् ? ।
कर्मात्मकं योगमपास्य चित्तं सुनिर्मलं वेत्तुमपीह शक्यम् ? ॥
पाकं त्वकृत्वाऽशनरीतिरन्या दृष्टा नु लोके गुरुमल्लिकार्जुन ?।

Without eating after labour how can hunger be satisfied ? Without the practice of Karmayoga, how can even the ascetic attain purity of mind ? Who can eat food without cooking it ?

व्यवसायव माडि मनेय वीयक्के बत्तविल्लदिद्दरे आ व्यवसायद गोडवे एकम्य ? क्रयविक्रयव माडि मनेय संचु नडेय-

दन्नक्क क्रयविक्रयद गोडवे एकय्य ? वडेयननोलयिसि तनुविङ्ग अष्टभोगव पडेयदिद्दरे आ ओलगद गोडवे एकय्य ? भक्तनागि भवं नास्तियागदिद्दरे आ उपदेशव कोट्ट गुरु, कोण्ड शिष्य इवरिब्बर मनेयल्लि मारि होगलि· गुहेश्वरलिंगवत्तले होगळि ॥ ९ ॥

कृषिं समाश्रित्य कुटुम्बपोषणं भवेन्न चेद्व्रीहिसमृद्धिपूर्वकम् ।
किं कार्यमेतेन ? वणिज्यया वा या पोष्यपोषाय न चेत्प्रगल्भा ? ॥
यदाश्रयादष्टविधोपभोगो न स्यात्किमेतेन पराश्रयेण ? ।
भक्तात्मतामाप्य भवात्ययस्तु यथा भवेन्नैव तथाविधेन ॥
शिष्मेण किं वाप्यथवोपदेष्ट्रा ? गुहेश्वरो नैव विशेत्तु तद्गृहम् ।
इत्थं सतीहैव तयोर्गृहं तु मारी प्रविश्याऽशिवमापयेन्नु ॥

What is the good of farming if one can't get food for one's house ? What is the good of engaging in trade if one cannot earn enough for the maintenance of one's family ? What is the good of serving a master if the service does not bring wealth and comfort ? If the devotee does not attain eternal happiness by his spiritual practice, what is the good of a teacher giving him instruction ? Lord Guhesha would not be well desposed to both of them. They would both come across innumerable miseries in life as though they are contacted with Mari.

सासिवेयष्टु सुखक्के सागरदष्टु दुःख नोडा. गळिगेय वेटव माडिहेनेम्ब परिय नोडा. तन्ननिक्कि निधानव साधिसिहेनेन्दडे बिन्नाण तप्पित्तु गुहेश्वर ॥ १० ॥

सर्षपप्रमितसौख्यमुपैतुं जीव एष भजतेऽब्धिसद्दक्षम् ।
दुःखमेव खलु सर्वत एवेत्येष सर्वविदितः खलु नूनम् ॥
कामिनीसुखसमागमलोभात्किन्न किन्तु न करोति नरोऽत्र ? ।
आत्मनाशमनवेक्ष्य निधीनामार्जनेन किमु सत्फलमेयात् ॥

To get a grain of happiness one has to go through an ocean of misery. So one must not go through great exertion in order to obtain a small return. It is no good losing oneself in order to gain the whole world.

एवं महता प्रमाणेन व्यवहारे कृतेऽपि साधकैः स्वार्थता परित्याज्यैव । यदि मनोनैर्मल्येन ईश्वरप्रीत्यर्थं व्यवहारो निरुह्येत तदैव साधकः सन्तोषप्रकृतिमधिगच्छेत् ; संपत्समृद्धिं च प्राप्नुयात् । स एव आत्मकल्याणं साधयेत् ; ईश्वरानुग्रहं च लभेत । एवं सर्वैरपि मानवैः तृप्त्या शान्त्या च व्यवहर्तव्यं ? तथैव श्रेयोऽभ्युदयावधिगन्तव्याविति शरणा निरीक्षन्ते ॥

विनैव फलापेक्षां कायकभावनया यत्कर्तव्यं क्रियते तदेव परमात्मने रोचेत । यदेव परमात्मने समर्प्येत तदेव तदीयमिति

यो भावयति स एव दुःखविमुक्तो भूत्वा नित्यसुखी संपद्यते। एतादृशानन्दानुभवायैव कायकमाचरणीयम्। तदैव लोके दारीद्र्यं विनश्येत्; सद्भावना च विकासमेयात्। फलमपेक्ष्य कर्माचरणं तु सर्वथा तुच्छमेवेत्याह--

मज्जनक्केरेदु फलव बेडुवरय्य तमगेल्लियदो आ फल सिताळक्कल्लदे? पत्रेपुष्पदल्लि पूजिसि फलव बेडुवरय्य तमगेल्लियदो आ फल तरुगळिगल्लदे? सुविधानवनर्पिसि प्रसादद फलव बेडुवरय्य तमगेल्लियदो आ फल हदिनेण्टु धान्यक्कल्लदे? लिङ्गदोडवेय लिङ्गक्के कोट्टु फलव बेडुव सर्व अन्यायिगळनेनेम्बे गुहेश्वर ॥ ११ ॥

जलाभिषेकात्फलमिष्यते यद्रसातलं गच्छति तन्न पूजकम्।
पत्रेण पुष्पेण समर्चनात्फलं यदिष्यते तत्तरुमेव गच्छति ॥
समर्प्य भोज्यं, फलमिष्यते यत् तदप्युपेयाद्विविधं हि धान्यम्।
लिंगस्वमेतच्च निवेद्य लिङ्गे फलं न याच्यं शिवयोगनिष्ठैः ॥
कांक्षन्ति ये तत्फलजातमद्य धिक्कारयोग्याः खलु ते गुहेश्वर।

If I bathe Istalinga with water, the credit would go to the Netherland which is the source of water. If I worship It with flowers, the credit would go to the trees offering flowers. If I submit sweet dishes to It, the credit would go to the grains. As I am only the instrument in using

your own materials for your worship, I cannot claim any fruit for myself. To offer your own goods to you and seek return from you would be a heinons offence.

कर्माचरत् जीवस्तदानीं कथमात्मानं जानीयादित्याह—

माडुव भक्तनु नीने. माडिसिकोम्बुव देवनु नीने· इदु कारण, अखण्डेश्वर ! निम्म फलपदव नोडलिल्ल· नीवु ओलिदु एनगे कोडलिल्ल ॥ १२ ॥

त्वमेव भक्ति कुरुषे तथैव भक्तैस्त्वमेवासि च सेव्यरूपः ।
न दृष्टमेवेह भवत्पदं मया त्वयापि दत्तं नहि मे भवत्पदम् ॥

O Lord Akhandesha ! You are the devotee who worships. You are also the God worshipped. (By virtue of your supreme power, you can become both.) Therefore I have received no good from you ; and You cannot offered me your status with love. Hence, I am concerned with the work you have entrusted to me.

यतः कर्ता कारयिता उभावप्येक एव स्तः, ततः कायकनिरतो जीवः उभयोरेकत्वस्याविज्ञानदशायां कृतस्य कर्मणः परिहारार्थं ज्ञानप्राप्त्यनंतरं शिवस्य प्रीत्यर्थमेव कर्म अनुष्ठातुं प्रयतते । सः जीवः 'स्वयमेव सर्वं करोमि' इति न कस्यापि पुरः कुत्रापि

वदेत्। तथैव 'सर्वमपि कर्म कारयिता शिव एव करोति' इति मत्वा सः तूष्णीं न तिष्ठेत्। कर्तुर्जीवस्य कारयितुः शिवस्य च संयोगादेव यत्किञ्चित्कर्म साधितं भवेत्। अतो जीवः स्वस्मा एव फलं यदि इच्छेत् तदा कारयितुराग्रहपात्रं भवेदेव। एतादृश्यां स्थितौ साधकः कथं वर्तेत? कथं च कर्म कुर्यात्? इत्येतदाह--

माडुवन्तिरबेकु. माडदन्तिरबेकु. माडुव माटदोळगे तानिल्लदन्तिरबेकु. कूडलसङ्गमदेवन नेनेवुत्त नेनेवुत्त नेनेयदन्तिरबेकु ॥ १३ ॥

कुर्वन्नकुर्वन्निव वर्तमानः कालं नयेद्भावितचित्तवृत्तिः।
कर्तृत्वभावे स्वयमप्यतिष्ठन् करोति यस्त्वेष हि कर्मयोगी ॥
स्मृत्वापि देवं गुरुसङ्गमार्यं वसेच्च नित्यं ह्यननुसरन्निव।

You must appear to be acting. At the same time you must appear not to be acting. You should appear to be separated from the act also. As youmeditate on God Sangama, you must appear not to be meditative.

अमृतक्के हसिवुण्टे? जलक्के तृषेयुण्टे? घनपुरुषङ्गे विषयवुण्टे? सद्गुरुकारुण्यविडिदु लिङ्गार्चनेय माडुव महाशरणंगे मुक्तिय वयकेयुण्टे? अवरुगळिगे अदु स्वयंभु; सहजस्वभाव. इन्नु तृप्ति आप्यायनव अरसळुण्टे? ॥ १४ ॥

दृश्यते किमु तृषा सलिलस्य ? श्रूयते किमु पचिस्त्वमुतस्य ?।
योगिनां किमुदपादि कदाचिद्भोग्यवस्तुषु दृगर्पणबुद्धिः ? ॥
सद्गुरोः प्रियतमत्वमुपेतः शरण इच्छति किं विमोचनम् ?।
ईदृशः सहजभावमुपेतो बाह्यतः किमभिवाञ्छति तुष्टिम् ? ॥

Nectar has no hunger. Water has no thirst. The saintly person has no passions. When one by the mercy of Sadguru worships Linga and performs his duty as divine worship, he would not entertain any desire for Mukti. It is within them and inherent. He need not go elsewhere in search of it.

अमृतसागरदोळगिद्दु आकळ चिन्ते एके ? मेरुमन्दिर-दोळगिर्दु जरग तोळेव चिन्ते एके ? श्रीगुरुविनोळगिद्दु तत्त्वविद्येय चिंते एके ? प्रसाददोळगिद्दु मुक्तिय चिंते एके ? करस्थल-दोळगे लिङ्गविद्दबळिक मत्तिन्नाव चिन्ते एके हेळा गुहेश्वर ॥ १५॥

क्षीराब्धिमध्ये वसतो हि पुंसः धेनोश्च चिन्ता कथमुद्भवेन्नु ?।
मेरोर्निवासे वसतो हि पुंसः कुतः सुवर्णस्य शुचित्वचिन्ता ? ॥
गुरोर्हृदन्ते वसतो हि पुंसः किं तत्त्वविद्यापरिचिन्तनेन ? ।
प्रसादमात्रेण जिजीविषुर्यस्तस्यापि चिंता कुत एव मुक्तेः ? ॥
लिंगे करस्थे किमु चिन्तयाऽन्यया गुहेश्वराश्रवय तत्त्वमेतत् ।

If one is in the ocean of nectar, where is any need of a cow for milk ? If one is in Meru

mountain, where is any need of the purification of gold ? If one has the grace of an enlightened teacher, where is any need to study philosophy? If one treats the world as blessed, where is any need to seek salvation from elsewhere ? If one has got Linga in one's palm, how can there arise a need to require anything more ?

होत्तारे एद्दु कण्ण होसेवुत्त एन्न ओडलिंगे एन्न ओडवेगे एन्न मडदिमक्कळिगेन्दु कुदिदेनादरे एन्न मनक्के मनवे साक्षि. भविबिज्जळन गद्दुगेय केळगे कुळ्ळिर्दु ओलैसिहेनेंदु नुडिवरय्य प्रमथरु. कोडुवेनुत्तरवनवरिगे. कोडलम्मे. होलेहोलेय मनेय होक्कादरू, सले कैकूलिय माडियादरू निम्म निलविंगे कुदेवेनल्लदे एन्नोडलवसरक्के कुदिदेनादरे तलेदण्ड कूडलसंगमदेव ॥ १६ ॥

प्रभात उत्थाय मृजंश्च नेत्रे समोदरार्थं मम भूषणार्थम् ।
ममैव जायासुतपोषणार्थं सञ्चिन्तये चेन्मन एव साक्षी ॥
समाश्रयादेव च बिज्जळस्य वृत्तेर्विधानं प्रहसन्ति सन्तः ।
तदुत्तरं दातुमहं समर्थस्तथापि नेच्छामि तथैव वक्तुम् ॥
प्रविश्य चण्डालगृहं तथैव भृतिं समासाद्य गुरोः पदं विना ।
स्वकुक्षिपूर्त्यै यदि चिंतयेयं तदा भवेयं गुरुनिग्रहास्पदः ॥

I do not wish to struggle for the sake of myself, my body or my family. I only wish to live in order to offer devotion to You, Lord

Sangama ! I heartily declare that I do not like to exist for myself. Still, Sharanas have objected to my service under Bijjala who is not a Bhakta, I may answer their objectious but I should not. Let them be aware of my standpoint. Though I serve even at the untouchable's house and attend to my labour, I worry myself not for my own maintenance but for Your pleasure, O Lord Sangama !

एवं कायकस्यावश्यकतां महत्त्वं च निरूप्य मानवैरधिगन्तव्योऽनुभवप्रकार उत्तरत्र प्रतिपाद्यते। कायकवानेव स्वानुभवं प्राप्तुं प्रभवति। कायकरहितः पुरुषः अलसो दरिद्रो रोगग्रस्तश्च सन् भुवो भार एव संपद्यते। सः न केवलमैहिकैर्जनैः परं तु परमात्मना च परित्यज्यते। मानवैरेतादृशैरशक्तैर्न भाव्यं; किंतु वीरैर्धीरैः पुष्टैः परहितनिरतैश्च भवितव्यमिति शरणा इच्छन्ति ॥

———

## अनुभवपद्धतिः

शरणाः न केवलं अर्चनार्पणकालयोः, न च केवलं प्रातरारभ्य सायंपर्यन्तं कार्यनिर्वाहसमये, परन्तु सुषुप्तेः पूर्वं घण्टाद्वयं त्रयं वा एकत्र मिलित्वा स्वीयानुभवप्रकारं लोककल्याणदृष्ट्या कथयन्त आसत्। प्रतिदिनं अर्चनार्पणकायकनिर्वाहकालेषु तैस्समार्जितमनुभवं

अभ्यासदार्ढ्याय इतरेषां मनस्स्थैर्यसंपादनाय च ते परस्परं मिळित्वा स्वानुभवं निवेदयन्त आसन्। अयं सर्वोऽप्यनुभवः देहं मनो बुद्धिं अहङ्कारं च देवभावेन परिवर्तयितुं प्रभवति। तेषां दिव्यवाणीं मनसा आकर्ण्य मानवाः स्वान्तर्गतमव्यक्तं परतत्त्वं अनुभवेयुः। अत एव शरणवाणी क्षीरप्रवाहसदृशेत्यनुभविभिः कथ्यते। देहादिप्रकृतेः सत्परिणामेन आत्मस्वरूपाविष्करणेन च सा मानवकल्याणं साधयन्ती विराजते। तदीया प्रशंसा अत्रैवं दृश्यते—

हालतोरेगे बेल्लद केसरु; सक्करेय मळलु. तवराजद नोरे-तेरेयन्ते आचर वचनविरलु बेरे बाविय तोडि उप्पनिरनुम्बुवन विधियन्ते आयित्तेन्न मति कूडलसङ्गमदेव ॥ १ ॥

क्षीरप्रवाहे गुडपङ्कपूर्णे सच्छर्करावालुकसंविशिष्टे।
तथैव खण्डात्मकफेनयुक्ते सुभाषिते सत्यपि दिव्यवाक्ये ॥
कूपं खनित्वान्यसपेयरूपं क्षारं जलं पीतवतो गतिः स्यात्।

Sayings of saints resemble the pond of milk wherein the mud forms jaggery and the sands constitute sugar. Its white-foamed waves form the well-boiled sweetmeat. When such wise sayings are available, one need not listen to other teachings. One who listens to such teachings is like a man who digs a new well and drinks salt water.

आद्यर वचन परुप कण्डय्य. सदाशिवनेम्ब लिङ्गव नेरे नम्बुवुदु. नम्बलोडने नी विजयि कण्डय्य. अधरक्के कहि, उदरक्के सिहि. कूडलसंगन शरणर वचन वेव सविदंते ॥ २ ॥

आद्या च वाणी परुपैव दृष्टा समागता लोकहितार्थमेव ।
विश्वास्यमेकं हि सदाशिवाख्यं लिङ्गं ततश्चैव भवान् विजेता ॥
निंवस्य चास्वादनकाल एव तिक्तो रसो भासत एव बाह्ये ।
हृदन्तराळे मधुरस्वरूपः शरीरसंवर्धनपाटवेन ॥
तथैव चाद्येरितवाग्विशेषो ह्यादौ तु तिक्तस्तत एव चेष्टः ।

The words of saints may be harsh to the ears but are sweet to the heart like the margosa flowers To appreciate them, your mind should be divinely bent. They are held as parusha stone in chastening and sanctifying your mind. They make you believe in Linga, which brings you eternal happiness. If you believe in the existence of such Linga in your heart, you will get on well in every walk of life.

शरणानामनुभववाणीमेवावलम्व्य सर्वैरपि साधकैर्युक्तियुक्तैव वाणी सर्वांतर्यामिणः सन्तोषावहया रीत्या प्रयोक्तव्येत्याह——

नुडिदरे मुत्तिन हारदन्तिरवेकु. नुडिदरे माणिक्यद दीप्तियन्तिरवेकु. नुडिदरे स्फटिकद शलाकेयंतिरवेकु. नुडिदरे

लिंग मेच्चिच अहुदहुदेनवेकु· नुडियोळगागि नडेयिरदिद्दरे कूडल-
संगमदेवनेंतोलिवनय्य ॥ ३ ॥

उक्तं तु मुक्ताफलसन्निभं स्यात्तथैव तत्स्यान्मणिदीप्तितुल्यम् ।
तथैव तत्स्यात्स्फटिकोपमं हि तदेव चिद्रूपमखण्डलिंगम् ॥
हृदंतरे सन्निहितं च लिंगं स्यात्स्यादितीमां प्रवदेद्धि वाचम् ।
उक्तानुरूपं यदि कर्म न स्याद्देवस्सदा नैति वशं नरस्य ।
अतस्तु वाक्कायकसामरस्यं निरीक्ष्यते सज्जनचातकैस्तु ॥

One's talk should be like a garland of pearls. It should shine like lustre of the precious stone. It should be clear like the crystal stone. It should be so pure and lucid as the Internal Linga should approve. How can Lord Sangamesha approve if talk and action are not consistent with each other.

एतादृशी महत्त्वपूर्णा शरणानामनुभववाणी मानवजन्म-
बन्धोत्पत्तितत्परिहारक्रमनिवेदनपूर्वकमेव प्रवर्तते । तद्यथा—

एनगे भवपाश बन्द कारणवेनय्य ? हिंदण जन्मदल्लि
लिङ्गव मरेदेनागि, हिन्दण सिरियल्लि जंगमव जरिदेनागि.
अरिदोडीसंसारव होद्दलीवेने ? कूडलसंगमदेव ॥ ४ ॥

किमर्थमेतद्भवबन्धनं मे विनिन्दनादेव तु जंगमस्य ।
तथैव लिंगस्य हि विस्मृतेश्च प्रागेव जन्मन्यभवद्भवांकुरः ॥

मया तु जन्मान्तर एव देवो ज्ञायेत चेदद्य कुतः पुनर्भवः ?।

Why am I consigned to this bondage of Samsara? Did I in my previous birth insult a holy Jangama and forget the sacred Lingam?. Had I realiscd God in my past birth, how could I be subjected to this rebirth?

अनेन चैवंवि ज्ञायते "मानवः प्राक्तने जन्मनि परमात्मानं व्यस्मरत्, तद्विज्ञानिनश्च तिरश्चकार। अत एवः सः पुनः पुनरत्रा-गच्छति" इति। अत्र देहे स्थितस्य जीवस्य अन्यत्र गमनं पुनर्देहागमनं च संसार इत्युच्यते। अस्य संसारस्य लिङ्गविस्मरणं लिंगज्ञतिरस्करणं च बीजं संपद्यते। इदमेव बीजं मलः, कर्म, पाशः, बन्ध इत्यादिपदैरुच्यते। मानवाः सर्वेऽप्यत्र समागताः पाशबद्धा एव। पाशस्वरूपं च लिंगविस्मरणात्मकमिति निरूपितम्॥

इदं च लिंगं कथं वर्तते? निराकारं साकारं वा? तस्य च कथं वयं संबद्धाः? इत्ययमंशविज्ञानमेव अस्माभिरधि-गन्तव्योऽनुभवः। लिंगस्वरूपमेवं निरूप्यते शरणैः—

जगद्गल मुगिलगल मिगेयगल निम्मगल. पाताळदिंदत्तच निम्म श्रीचरण. ब्रह्माण्डदिंदत्तत्त निम्म श्रीमुकुट. अगम्य अगोचर अप्रतिमलिंगवे कूडलसंगमदेवय्य! एन्न करस्थळक्के बन्दु चुळुकादिरय्य ॥ ५ ॥

यावज्जगद्यावदियं हि भूमिर्यावच्च खं तावदिदं च लिंगम् ।
अखण्डमास्ते ; चरणं तदीयं पाताळतश्चापि विदूर एव ॥
ब्रह्माण्डतश्चापि विदूर एव तिष्ठेच्छिरस्त्वेवमगम्यरूपम् ।
तथा ह्यगम्यं परमात्मलिंगं ह्यगोचरं सर्वविधैश्च नित्यम् ॥
तथापि हस्ते चूलुकीकृतात्म विभासि नस्त्वं खलु संगमार्य ।

O Lord Sangamesha ! You are as big as the universe consisting of heaven and earth. Your head is beyond the universe and your feet are beyond the netherland. Though you happen to be such a vast, unimaginable and incomparable Being, You have graciously assumed the small shape, enough to be held in my palm for worship. Hence, there exists no difference in essence between God worshipped by a devotee in his palm and the All-pervasive God existing around him. But the devotee should obtain this adorable Lingam by a guru and realise Its identity with his conscience. As this constitutes his life, he should himself adore it with devotion and treat it as his favourite Istalinga. He must wear It on his body considering It as the very vital airs of his life. When he begins to adore his Lingam, he should not turn his attention elsewhere.

एवमिष्टलिंगमर्चयन्साधकः अन्यत्र अर्चनार्थं यदि गच्छति तदा सः पतितो भगवदाग्रहपात्रं च भवेदित्याह--

देवनोब्ब नाम हलवु. परमपतिव्रतेगे गण्डनोब्ब. मत्तोंदक्केरगिदरे किविमूग कोय्वनु. हलवु दैवद एञ्जल तिम्बवर-नेनेम्बे, कूडलसंगमदेव ॥ ६ ॥

एको हि देवः खलु नाम नाना पतिव्रतायाः पतिरेक एव ।
साऽन्यं यदीप्सेत्स पतिस्तदानु कर्णौ तथा घ्राणमपीह छिन्द्यात् ॥
उपास्यदेवं परिहाय भिन्नं समर्चयेच्चेत्पतितो भवेन्ना ।
अनेकदेवोञ्जितभक्षितारं शिष्टाः किमाहुः कथय प्रभो स्वयम् ॥

God is one ; but He is conceived in different forms. If the wife of a person forsakes him and resorts to another, she is chastised for guilt. Similarly, the devotee who passes from one for to another becomes a renegade and is forsaken. What salvation would come to such a person ?

नंबिद हेण्डतिगे गण्डनोब्ब काणिरो· नम्ब बल्ल भक्तंगे देवनोब्ब काणिरो· वेड बेड· अन्यदैवद संग होल्ल· अन्य-दैववेंबुदु हादर काणिरो· कूडलसंगमदेवनु कण्डरे मूग कोय्युव काणिरो ॥ ७ ॥

विश्वस्तपत्न्याः पतिरेक एव विश्वस्तभक्तस्य च देव एकः ।
मा माऽन्यदेवस्य च संग एषः यतः प्रतीतो व्यभिचार एव ॥
पश्येद्यदि श्रीगुरुसंगमार्यस्तदा हि कुप्येत विरुद्धवर्तिने ।

A wife's devotion is reserved to her husband and none else. A devotee should dedicate himself to God and none else. Those who think of the various forms giving up their favourite one will become sinners. God will punish such people.

मानवेषु चेतनेषु, जडवस्तुषु च देवः कथं निवसतीत्याह—

उदकदोळगे बच्चिट्ट वयकेय किच्चिनंतिद्दित्तु· शशियोळगण रसद रुचियंतिद्दित्तु· ननेयोळगण परिमळदंतिद्दित्तु. कूडलसंगमदेव! निम्म निलवु कन्नेय स्नेहदंतिद्दित्तु ॥ ८ ॥

जले यथा गूढतमोऽस्ति वह्नी रसश्च सस्येषु यथा निबद्धः ।
गन्धश्च पुष्पेषु यथा निरूढस्तथैव जीवेषु परो निगूढः ॥
बालासु सौहार्दमिवास्ति गूढं महेश्वरस्सर्वगतोऽपि गुप्तः ।

Just as fire is inherent in flowers, juice is inherent in herbs, scent is inherent in flowers, God is inherent in all individual beings. As love in a young maiden, God is hidden in all beings.

एवं सर्वत्र व्याप्तत्वादेव परमात्मा शरणैरनुभूयत इत्याह—

एत्तेत्त नोडिदोडत्तत्त नीने देव । सकलविस्तारदरुहु नीने देव कूडलसंगमदेव ॥ ९ ॥

यत्र यत्र च दृशं प्रहिणोति तत्र तत्र परिपश्यति स त्वाम् ।
यच्च यच्चं नयनाभिमुखं तत् संगमार्य ! भवतः खलु रूपम् ॥

Lord Sangama ! wherever I cast my glance, I see your presence everywhere. You are All-encompassing.

एल्लि नोडिदोडल्लि मनवेळसिदरे, आणे निम्माणे निम्म प्रमथराणे. परवधुवनु महदेवि एम्बे, कूडलसंगमदेव ॥ १० ॥

O Lord Sangama ! I swear by the name of You and the saints that I will not covet women and any other seeable objects. Every woman is held in high respects like goddess Parvati.

अत एव मानवः जगति सर्वत्र अव्यक्ततया विराजमानं परमात्मानमेव पश्यन् तद्गतान् लोपदोपानगणयन् सर्वांश्च देव-भावनया प्रीणयन् वर्तेतेत्याह—

ओब्बर मनव नोयिसि ओब्बर मनेय घातव माडि गंगेय मुळुगिदरे आगुवुदेनय्य ? चंद्रनु गंगेय तडियल्लिद्देरेनु ? कळङ्क बिडदायित्तय्य. अदु कारण मनव नोयिसदवने, घातव माडदवने परमपावन नोडा, कपिलसिद्धमल्लिकार्जुन ॥ ११ ॥

मनो निपीड्याथ गृहं विनाश्य त्रिस्रोतसस्त्वम्भसि संनिमज्य ।
कं विन्दसे मानव पुण्यलेशं पापीव गीर्वाणसुखं हि कांक्षन् ॥
गङ्गान्तिके यद्यवतिष्ठते ग्लौः किं त्यज्यते तेन कळङ्क एषः ।
ततश्च योऽन्यस्य मनो न पीडयन्न नाशयत्येव गृहं कदापि ॥
स एव धन्यो भुवि पावनश्च तवैष योगः कपिलार्यसिद्ध ।

If one causes hurt to another's feelings or destroys his property, how can he be purified by bathing in the ganges. If the darkspotted moon is reflected in the ganges, would the dark spot disappear ? Therefore he alone who injures none in mind or body can be said to be meri-torious to acquire God's grace.

एवं सर्वत्र विद्यमानं परमात्मानं यो नानुभवति सः जगति वसत् सुखं शन्ति च न लभत इत्याह—

ओले हत्ति उरिदडे निल्लबहुदल्लदे धरे हत्ति उरिदडे निल्लबहुदे ? एरि नीरुम्बडे, बेलि केयि मेवडे, नारि तन्न मनेयल्लि कळुवडे, ताय मोलेवालु नञ्जागि कोलुवडे इन्नारिगे दूरुवे कूडलसङ्गमदेव ॥ १२ ॥

चुल्ली ज्वलेच्चेद्द्रसितुं हि शक्यं तथा न शक्येत धराप्रवाहे ।
तटाक एवाम्बु पिबेदकस्मात् वृतिर्ह्यकस्माद्दलजेषु सस्यम् ॥
अद्यात्स्वयं योषिदुपक्रमेत वित्तापहारादिषु किन्नु कुर्यात् ? ।

स्तन्यं च मातुर्विषतामवाप्य शिशोस्तु पञ्चत्वमवापयेच्चेत् ॥
कस्मै वदेत्सङ्गमदेव तस्मात्स्वमेव संपश्य जगत्स्वभावम् ।

If the hearth in the house is in flames, it is welcome. If the entire earth is in flames, it is not so. If a tank drinks up water, if a hedge eats the field-crop, if a housewife steals in her own house, if mother's breastmilk becomes poison, to whom can one go for succour ?

अतो विषमस्वभावेऽस्मिन्प्रपञ्चे नैपुण्येन वर्तितुमुपायो यः कश्चिद्विद्येत चेत्स एव सर्वान्तर्यामिणः परमात्मनोऽनुभवः । प्राप्तानुभव एव पुमान् विषममृतं, सुखं दुःखं, शत्रुं मित्रं च समानतया द्रष्टुं शक्नोति । स एव वैषम्यवैविध्ययोर्मध्ये साम्यमैकविध्यं च मनसि अनुभवन् नित्यसुखी भवितुमर्हति । एकस्य देहे परमात्मा यथा वर्तते तथैव अन्यदेहेष्वपि वर्तते । सर्वत्र सः चिद्रूपतया निवसति । एतां स्थितिं स्वस्मिन् यः जानाति सः सर्वेष्वपि तामेव परमात्मस्थितिं पश्यति । इदमेव समदर्शनमित्युच्यते । एवं सर्वत्र वर्तमानमेव समवस्तु आत्मेत्युच्यते । एतस्यैव अनुभवः सर्वेषामावश्यकः । मानवः स्वात्मानं विहाय अन्यत्सर्वमपि ज्ञातुं प्रभवति । स्वानुभवं विहाय मानवः स्वप्रयत्नेन लोकैश्वर्यं प्राप्यापि नित्यसुखं न विन्दते । आत्मानुभविनस्तु ईश्वरप्रसादलभ्यः समदर्शनप्रकार एवं निरूप्यते—

नेलवोंदे होलगेरि शिवालयक्के. जलवोंदे शौचाचमनक्के. कुलवोंदे तन्न तानरिदवंगे. फलवोंदे षड्दर्शनमुक्तिगे. निलवु ओंदे कूडलसंगमदेव ! निम्मनरिदवंगे ॥ १३ ॥

ग्रामस्य बाह्यान्तरभेदमात्रादाकाशभेदः किमु सत्य एषः ।
जलेऽप्यभेदः परिदृष्ट एव शौचस्य चैवाचमनस्य लोके ॥
आत्मस्वरूपावगमस्तु येषां तेषां कुले भेदविदेव नास्ति ।
षड्दर्शनज्ञानजमुक्तिलभ्यं फलं द्वितीयं न च दृश्यते हि ॥
येनैव दृष्टं परमात्मरूपं तस्यैव निष्ठा न च सद्वितीया ।

The same ground serves as a residence for a holeya, a lowcaste person and for Shiva, the Adorable Personality. The same water serves for washing and for worship. Ancestry is the same for one who knows oneself. The fruit to be realised from the knowledge of six systems of philosophy is the same. Lord Sangama! There is only one stand to a person who knows the true nature of You.

ऊरोळगण बयलु, ऊर होरगण बयलु एन्दुण्टे? ऊरोळगण ब्राह्मणबयलु ऊर होरगे होले बयलु एन्दुण्टे? एल्लि नोडिदडे बयलोन्दे. मिथियिन्द ओळहोरगेम्ब नामवैसे. एल्लि नोडिदडे करेदडे ओ एम्ब कूडलसङ्गमदेव ॥ १४ ॥

एकैव भूमिः परिदृश्यते हि शिवालयस्य श्वपचालयस्य ।
ग्रामस्य मध्ये द्विजवासभूमिर्ग्रामाद्बहिश्च श्वपचस्य भूमिः ॥
किमेवमस्ति प्रविभाग एषः त्वां सर्वतो दृष्टवतो जनस्य ।
अन्तर्धिभेदात्खलु नामभेदः तन्नाशकालेऽन्तरबाह्ययोर्न ॥
भेदस्समस्तीति विभावयन्तः सर्वत्र पश्याम भवद्विभूतिम् ।

Open space inside the city and open space outside the city are not different in any way. There is no such thing as Brahmin space and pariah space. Open space is the same every where. From wherever you call, Kudala Sangama Deva will hearken.

एवमात्मनुभववान् पुरुषः देहेन्द्रियमनोबुद्धीनां समष्टिभावनया यथालाभसन्तुष्टः भिन्नप्रकृतिकान् सर्वानपि आत्मीयतया प्रीणयन् स्वयमपि सन्तोषेण निवसति । "सदा सन्तोषचित्तानां संपदस्तु पदे पदे ॥" इत्यनुभवोक्त्या स्वस्वरूपे सन्तोषे निवसतां सद्बुद्धिस्सद्भावना च स्वत एव उदेति । सदैव सः सर्वव्यापकस्य महागुरोः परमेश्वरस्य पूर्णकृपापात्रं भवति । तस्य वर्तनमत्र निरूप्यते—

नाळे वप्पुदु नमगिन्दे बरलि ; इन्दु वप्पुदु नमगीगले बरलि. इदकारञ्जुवरु इदकारळुकुवरु ! "जातस्य मरणं ध्रुवं" एन्दु कूडलसङ्गमदेव बरेद बरहव तप्पिसुवरे हरिब्रह्मादिगळिगळवल्ल ॥ १५ ॥

श्व एव यद्यच्च समागमिष्यति तदेव चाद्यैव समाप्नुतान्मम।
यदद्य भाव्यं तदुपैतु सद्यः बिभेति कोऽस्मादथवाश्रु मुञ्चेत् ॥
जातस्य तावन्मरणं ध्रुवं स्यात्कर्मानुसारं गुरुणैव केवलम्।
यदेव लिख्येत ललाटदेशे तच्चापि धात्रा नहि मार्ष्टुमर्हम् ॥

What must come tomorrow, let it come today. What comes today let it come immediately. There is no use being afraid of one's fate. Birth is invariably followed by death. This decided writing of Sangama Deva can never be changed even by the personal gods. What should happen will certainly happen.

मानवः प्रकृत्यपरनामधेयायां वशङ्गतः तदीयमलपाशेन बद्धः परमात्मानं तदंशभूतमात्मानं च विस्मृत्य बाह्यविषयेष्वेवासक्तो वर्तते। तथापि परमात्मस्मरणात् मायापाशनिरोधाय प्रभवति स इत्याह—

करि घन ; अंकुश किरिदेन्नबहुदे ? बारदय्य. गिरि घन ; वज्र किरिदेन्नबहुदे ? बारदय्य. तमन्ध घन ; ज्योति किरिदेन्न-बहुदे ? बारदय्य. मरहु घन ; निम्म नेनेव मन किरिदेन्नबहुदे ? बारदय्य. कूडलसङ्गमदेवय्य ॥ १६ ॥

महान्गजस्त्वङ्कुश एव चाल्पः इत्येव संभावयितुं न शक्यम्।
गिरिर्महान्भेदकवज्र अल्पः इत्येव संभावयितुं न शक्यम् ॥

तमो घनं ज्योतिरिहाल्पमेतदित्यप्ययुक्तं वचनं प्रयोक्तुम् ।
अपोहनं मे घनतामुपैति त्वत्संस्मरच्चित्तमुपैति चाल्पताम् ॥

इत्यप्ययुक्तं वचनं प्रयोक्तुं ह्यतो भवेन्नाणु मनः कदाचित् ।
भवत्कृपाया गुरुसंगमार्य न किञ्चिदेवात्र सुदुर्लभं भवेत् ॥

Can we say that the elephant is big and the goad which controls it is small ? No. Can we say that the mountain is big and the Vajra weapon which breaks it is small ? No. Can we say that darkness is big and light is small ? No. Can we say that forgetfulness is big and the mind which remembers God is small ? No. If the mind goes on thinking of God, no bondage can continue to exist.

सर्वव्यापिकायाः मायायाः दुष्प्रभावोऽपि देहेऽव्यक्ततया स्थितस्य परमात्मनः स्मरणात् परिह्रियत एवेत्याह—

जगव सुत्तिप्पुदु निन्न मायेयय्य. निन्न सुत्तिप्पुदु एन्न मन नोडय्य. नीनु जगक्केल्ल बल्लिदनु. आनु निनगे बल्लिदनु कण्डय्य. करियु कन्नडियोळगडगिदन्ते एन्नोळगे नीनडगिदेयय्य कूडलसंगमदेवय्य ॥ १७ ॥

त्वदीयमाया गुरुकूडलार्य सर्वं जगत्सर्वत आवृणोति ।
तथा भवन्तं परितस्तृणोति मनो मदीयं त्विदमत्र चित्रम् ॥

प्रभुर्यदि त्वं जगतो हि देव तवाहमत्रास्मि विनोदभूमिः ।
करी यथा दर्पण एव लीयते तथा त्वमेवाद्य निलीयसे मयि ॥

Lord Sangama! your maya makes the universe revolve around it; but my mind revolves around You. You are the master of the universe but I offer You support for residence. Just as an elephant's image lies hidden in a small mirror, You the Allpervading Spirit lie hidden inside me.

एवं भगवदाश्रयस्थलभूतो भक्तः भगवत्तेजोरूपत्वात् सर्वश्रेष्ठ इति सनिदर्शनं निरूपयति--

समुद्र घनवेम्बेने? धरेय मेलडगित्तु. धरे घनवेम्बेने नागेन्द्रन फणामणिय मेलडगित्तु. नागेन्द्र घनवेंबेने? पार्वतिय किरुकुणिय मुद्रिकेयायित्तु. पार्वति घनवेम्बेने? परमेश्वरन अर्धाङ्गिनियादळु. परमेश्वरन घनवेम्बेने? कूडलसंगन शरणर मनद कोनेय मेलडगिदनु ॥ १८ ॥

घनः समुद्रः किमु? नैतदेव ; यतो हि भूमावयमेव लीनः ।
भूमिर्घना किम्? न च युज्यते तथा; यतो हि सा तिष्ठति नागमस्तके ॥
नागो घनः किम्? न च तद्धि युज्यते; यतो हि नागस्त्ववलम्बते ह्युमाम्
उमा घना किम्? न हि तच्च युज्यते; शिवार्धभागे तु निवेशिता सा॥

शिवो घनः किम्? न च तद्भवेन्नु; यतो ह्यसौ तिष्ठति सङ्गमार्य।
त्वदेकनिष्ठस्य हृदग्रभागे; ह्यतश्च भक्तो भवदीयतेजः॥

Is the sea selfexistent? No. It is based on earth. Is earth selfexistent? No. It is based on the head of serpant-lord. Is serpent-lord selfexistent? No. It has formed a ring on the finger of Goddess Parvati. Is Parvati self-existent? No. She forms a part of the body of Shiva. Is Shiva selfreliant? No. He is on the tip of the mind of Sharanas.

देहस्थस्य शिवस्य अनुभववान् पुरुषः स्त्री वा सर्वेन्द्रियाणि सुव्यवस्थया उपयुङ्क्तः। इन्द्रियाणां दुरुपयोग एव मृत्युदायिक मारीति शरणा भावयन्ति। प्रमाद एव मृत्युः। तदेव विशदयति—

मारि मसणि एम्बवु बेरिल्ल काणिरो! मारि एम्बुदेनु? कण्गळु तप्पि नोडिदरे मारि. नालिगे तप्पि नुडिदरे मारि. कूडलसंगमदेवन नेनह्ह मरेदरे मारि॥ १९॥

मारीति लोके प्रथिताऽतिरिक्ता नास्त्येव वक्त्रेक्षणमेव मारी।
विभिन्नरूपेण च भाषमाणा जिह्वैव मारी कथिता नयज्ञैः॥
संगार्यदेवाऽस्मरणं हि मारी एतां च मारीं त्यजतः सुखं स्यात्॥

Evil sprits are not separate entities. If the eyes roam about here and there in evil ways, it

is mari, destructive to one's life. If the tongue speaks ill of others, it is mari. If the mind strays from God it is mari, harmful to oneself.

अत एव अनुभवी सर्वदा व्यवहारसमये शुद्धमनास्सन् परस्त्रीपरधनेभ्यो बिभ्यतीत्याह—

हरिव हाविगञ्जे· उरिय नालिगेगञ्जे· सुरगिय मोनेगञ्जे. ओंदक्कंजुवे ; ओंदक्कञ्जुकुवे. परस्त्रीपरधनवेम्बी जूजिगंजुवे. मुन्नजद रावणने विधिवशनाद· अंजुवेनय्य कूडलसंगमदेव ॥ २० ॥

स्वपतो भुजगाद्बिभेमि नाहं ज्वलतो ज्वलनाद्बिभेमि नाहम् ।
तथैव खड्गस्य सुतीक्ष्णधारापाताच्च नाहं तु बिभेमि देव ॥
पराङ्गनावित्तमयाद्दुरोदरात् बिभेमि नेतोऽन्यत एव देव ।
एष्वेकतोऽबिभ्यदयं दशास्यः विधेर्वशोऽजायत सङ्गमेश ॥

I don't fear the snake. I don't fear the fire. I fear only others' women and others' wealth. Even Ravana was destroyed by them.

एवं सर्वव्यापिनो भगवतः स्वरूपं विविच्य निर्दिशति—

साविल्लद, रूहिल्लद, केडिल्लद, चलुवनव्व. एडेयिल्लद, तेरहिल्लद, कुरुहिल्लद चेलुवंगानोलिदे एले अव्वा· नी केळा, ताये. भवविल्लद, भयविल्लद, निर्भयचलुवङ्ग, कुलसीमेयिल्लद निस्सीम चलुवंगे नानोलिदे. इदु कारण, चन्नमल्लिकार्जुनने चलुव गण्डनेनगे. ई साव केडुव गण्डरनोय्दु ओलेयोळगिक्कु ॥२०॥

अरूप एवास्तु मम प्रियो हि तथैव संवर्जितजन्ममृत्युः ।
तस्मिन्नभीकेऽसदृशेऽतिसुन्दरे वशंगताहं खलु मल्लिकार्जुने ॥
निरन्तरेऽलक्षितगोत्रसूत्रे निमज्जति स्वान्तमिदं निरीहम् ।
मदीयचन्नं गुरुमल्लिकार्जुनं विहाय नान्यं परिचिन्तयेऽहम् ॥
मृतेर्भयादत्र वसन्हि कश्चित् मर्त्यः कथं मे पतिरस्तु देव ? ।

O my mothers ! I am wedded to God Channamallikarjuna, who is handsome, disease-less, deathless, birthless, fearless, formless eternal and all-pervading by nature. How can an ordinary mortal be my husband ?

देवस्य मूर्तामूर्तस्वरूपमत्र विविच्य निर्दिशति——

तन्न विनोदक्के ताने सृष्टिसिद सकलप्रपञ्चवनु· तन्न विनोदक्के ताने तिरुगिसिद अनन्तदुःखगळल्लि· इन्तेन्न चन्न-मल्लिकार्जुननेम्ब परशिवनु जगद्विलास साकादडे मत्ते परिवनु आ मायापाशवनु ॥ २१ ॥

देवोऽसृजत्सर्वमिमं प्रपञ्चं स्वस्यैव मोदाय तदीयशक्त्या ।
अनंतदुःखेषु निमज्जयित्वा विनोदयत्येव सदा सलीलम् ॥
तथा मदीयो गुरुमल्लिकार्जुनः संश्लेपयत्यात्मनि तं च पाशम् ।
जगद्विलासे विरते स नित्यं सन्तिष्ठते केवलामत्मनिष्ठः ॥

For His own delight, the Universal Spirit created the vast universe. He made it revolve

in giant circles. He is the creator of all earthly panorama. He will end it all and grant eternal peace when He wills.

साधकैरधिगन्तव्यमनुभवप्रकारमधुना प्रतिपादयति । तद्यथा–

अय्य ! तन्न तानरिदोडे ताने चिन्मयनाद परब्रह्म नोडा-ताने चिन्नादचिद्बिन्दुचित्कळामूर्ति नोडा. ताने सकलचैतन्य-सूत्रधारि. तन्निन्दधिकपरदैवविल्ल नोडा. ताने सच्चिदानंद-स्वरूपवाद चिद्घनलिंग नोडा अप्रमाणकूडलसङ्गमदेव ॥ ७२ ॥

रूपं स्वकीयं स्वयमेव दृष्ट्वा स्वयं चिदानन्दमयत्वमेति ।
चिन्नादचिद्बिन्दुकलास्वरूपी स्वयं विराजेत स्वशक्तिहासात् ॥
स्वस्माद्विभिन्नं परतत्त्वमेव न विद्यते मानव संशृणु त्वम् ।
चैतन्यरूपः खलु सूत्रधारी सर्वात्मना वर्तत एव नित्यः ।

When one realises oneself, one becomes Universal Spirit, of the nature of pure consciousness, of the form of knowledge itself personified and the creator of all life. There is no greater God than one's own redeemed self. Thus the realised soul becomes Linga of the nature of Existance, Knowledge and Bliss and shines unaffected by the defects of the body and the world.

परमात्मनो विश्वव्यापकत्वमधुना निरूप्यते––

विश्वदोळगेल्ल नीने देव. विश्वभरितनु नीने देव. विश्वपति नीने देव. विश्वातीतनु नीने देव अखण्डेश्वर ॥ २३ ॥

अखण्डेश्वर त्वं वसस्येव विश्वे ह्यखण्डैश्च रूपैस्सदा विश्वरूप ।
त्वमेवासि वंद्यस्समस्तात्मनां च त्वमेवासि विश्वान्यतीत्यापि वंद्यः ॥

O God Akhandesha! You are in all the universe. You are filled by the universe. You are the lord of the universe and You are greater than the universe.

मरदोळगण मंदाग्निय उरियदंतिरिसिदे. नोरेवालोळगे तुप्पव कम्पिल्लदंतिरिसिदे' शरीरदोळगात्मन काणदंतिरिसिदे. नी बेरेसुव भेदक्के बेरगादेनै रामनाथ ॥ २४ ॥

विनैव दाहं तरुषु त्वयाग्निः संस्थापितः श्रीगुरुरामनाथ ।
विनैव गन्धं निहितं पयस्सु घृतं तथा देह अयं च जीवः ॥
संयोजितस्तेन च विस्मितोऽस्मि संप्रार्थये त्वय्यविभज्यवासम् ॥

You have kept fire flameless in the wood, You have hidden the clarified butter in the foaming milk. You have kept the soul unseen within the body. O God Ramanatha! I am amazed at the wonderful combination You have brought out in your creation.

आत्मानुभविनः शिवयोगिनः जीवनक्रममत्र निरूपयति—

एन्न अंतरंग नीवय्य. एन्न बहिरंग नीवय्य. एन्न अरिवु नीवय्य. एन्न मरहु नीवय्य. एन्न भक्ति नीवय्य. एन्न युक्ति नीवय्य. एन्न आलस्य नीवय्य. एन्न परवश नीवय्य. समुद्रव होक्क कालु ओळदक्कि कोरतेयनरसुवुदे आ समुद्रवु. एन्न लेसु होल्लेम्बुद नीवे बल्लिरि. अदक्के निम्म पादवे साक्षि. एन्न मनवे साक्षि कूडलसंगमदेव ॥ २५ ॥

मदंतरङ्गात्मकतामुपेतस्त्वमेव जातो बहिरङ्ग एव ।
ज्ञानं मदीयं च भवत्स्वरूपं तथैव मद्विस्मरणं भवान्हि ॥
भक्तिस्तथा मे भवदात्मिकैव युक्त्यात्मना त्वं भवसीह लोके ।
मदीयमालस्यमपि त्वमेव ममाप्यधीनस्त्वमसीह जातः ॥
पादप्रवेशं बत वार्धिरेषो दोषात्मना किं मनुते कदापि ? ।
त्वमेव जानासि यदेव मत्प्रियं तथैव जानासि यदप्रियं तत् ॥
तवैव पादः परमं प्रमाणं तथैव मे चित्तमपीह साक्षी ।

O Lord Sangama ! You are internal and external to me. You are my knowledge and ignorance. You are my devotion and cleverness. You are my remissness and my bondage. You are the ocean which I have entered and become a part of it. Hence You are not in a position to mar me. You know what is pleasant and what is unpleasant to me. You

are an authority in this matter and my mind stands a reliable witness to my attitude.

अय्य ! निम्म अनुभावदिंद एन्न तनु हाळायित्तय्य. अय्य ! निम्म अनुभावदिंद एन्न मन हाळायितय्य अय्य ! निम्म अनुभावदिंद एन्न कर्म छेदनवायित्तय्य. निम्मवरु अडिगडिगे हेळि भक्ति एम्ब वडवेयनु दिटव माडि तोरिद कारण अल्लिल माडुवरु माडिसिकोम्बवरु नीवे कूडलसङ्गमदेव ॥ २६ ॥

तवानुभावात्तनुरेव नष्टा तवानुभावान्मन एव नष्टम् ।
तवानुभावान्मम कर्म नष्टं न मेऽस्ति किञ्चिद्गुरुसङ्गमार्य ॥
पुनः पुनः प्रोच्य तवैव भक्ता भक्त्याख्यरत्नाभरणं प्रदर्श्य ।
यथार्थयामासुरतश्च तत्र कर्ता भवान् कारयिताऽनुभोक्ता ॥

Lord Sangama ! By realisation of You, my body has ceased to exist ; my mind has ceased to exist; my karma has been expiated. Your own devotees have implanted and impressed on me the value of devotion. Hence, you have become both worshipper and Worshipped.

शिवानुभवं कामयमानस्य भक्तस्य प्रार्थनात्र दीयते--

एन्न मायद मदव मुरियय्य. एन्न कायद कळवळव केडिसय्य. एन्न जीवद जञ्जडव बिडिसय्य. एन्न देव मल्लिकार्जुनय्य ! एन्न सुत्तिद मायाप्रपञ्चव बिडिसय्य ॥ २७ ॥

मायामदं भञ्जय मल्लिकार्जुन प्रजागरं कायिकमुन्निवर्हय ।
चित्तस्य चाञ्चल्यमपोह्य नित्यं मोहप्रपञ्चं श्लथय त्वमेव ॥

My Lord Mallikarjuna! I pray You to cure me of my ignorant conceit and remove the trammels of my body. I pray You to lead me out of the world of Maya which has infatuated me with all-round bondage.

चंद्रमनंते कळे समनिसेत्तेनगे· संसारवेम्ब राहु सर्वग्रासियागि नुङ्गित्तय्य· इन्देन्न देहक्के ग्रहणवायित्तय्य इन्नेन्दिङ्गे मोक्षवहुदो कूडलसङ्गमदेव ॥ २८ ॥

इन्दौ प्रभेवात्मनि संगता प्रभा यतस्ततः संसृतिराहुरेषः ।
निगीर्णवानद्य; कदा नु मोक्षः ? दयस्व भृत्यं गुरुकूडलार्य ॥

My body was shining like the Moon. It is eclipsed completely by this bondage-like serpent Rahu. My riddance depends entirely on Your grace. When am I fortunate to get it ? O Lord!

ताय गर्भदल्लि शिशु ताय कुरुहनरियदु. आ तायि शिशुविन कुरुहनेन्दू अरियळु· मायामोहदल्लिप्प भक्तरु देवनरियरु. देवनु आ भक्तरनेन्दू अरियनु काणा, रामनाथ ॥ २९ ॥

गर्भे स्थितिं यावदुपैति मातुस्तावद्विजानाति शिशुर्न मातरम् ।
तथैव मातापि शिशुं न वेत्ति तथैव मायावशगाश्च भक्ताः ॥
जानन्ति देवं न कदापि देवो भक्तान्न वेत्ति शृणु रामनाथ ।

The infant in mother's womb does not know the mother. The mother cannot know the infant. Engrossed in the fog of maya, the devotees do not know You, O Lord Ramanatha! Hence you cannot recognise them as Yours.

शिवानुभवसाधनप्रकार अधुना साधकसौकर्याय निरूप्यते–

गिरिगळ गुहेगळ कंदरदल्लि, नेलहोलदल्लि इप्पे देव. एल्लि नोडिदरल्लि इप्पे देव· मनक्कगम्य अगोचरवागि अल्लल्लि इल्लियू नीने इप्पेयय्य गुहेश्वर· निम्मनगलक्के हरिवरिदु कण्डे नानु॥

गोत्रकन्दरगुहासु रसायां क्षेत्रभाग इतरत्र च नस्त्वम् ।
तद्वदेव कुहचिन्नयनानां अर्पणेऽपि ननु तत्र च दृश्यः ॥
सत्यपीत्थमभिमानिनि चित्ते न स्फुरस्यभिमतिर्यदि शुद्धा ।
भावशुद्धियुतमानसचक्षुः पश्यतीशमभितस्त्वयमात्मा ॥

You are in mountains and valleys. You are in lands and fields. You are everywhere. In spite of your being everywhere, you are inaccessible and unknowable to the mind which is filled with arrogance. But You are knowable to a person who is endowed with the purity of heart if he is free from arrogance.

देवर नेनेदु मुक्तरादेवेम्ब युक्तिशून्यर मातु केळलागदु. अदेनु कारणवेंदरे देवर नेनेदरे देवरुण्टे दूर? दूरदल्लिद्दवर

नेनेवरल्लदे समीपदल्लिद्दवरनारू नेनेवरिल्ल· इदनरिदु निन्नोळडगि ना निन्न नेनेयलिल्ल ॥ ३१ ॥

स्मृत्वापि देवं वयमद्य मुक्ता इत्येवमुक्तिर्न विवेकयुक्ता ।
अत्रापि हेतुं शृणु भक्तवर्य स्मर्तुं हि देवः किमु दूर आस्ते ॥
दूरस्थमेवेह स्मरेत्सदैव न ह्यन्तिकस्थं पुरुषं स्मरन्ति ।
एतद्धिदित्वाहमनुप्रविष्टस्त्वयीति बुद्ध्या न भवान्स्मृतोऽभूत् ॥

Fools say that they were liberated from bondage by the remembrance of God. If you have to remember God, how can it be possible as He is very near you. People remember only those who are far away and not those nearby. Therefore I don't remember You, as You are very near and dear to me in my heart.

एवमात्मनि भगवत्सान्निध्यमनुभवन् साधकः स्वेनाधिगतं आत्मियं फलं निवेदयति—

तन्न तानरिदोडे ताने गुरु; ताने लिंग· तन्न निष्पत्तिये जङ्गम· इन्ती त्रिविधवु ओन्दादडे कामेश्वरलिंगवु ताने ॥ ३२ ॥

स्वयं विजानाति य एष नित्यं स्वयं गुरुर्लिंगमपीह साक्षात् ।
स एव कामेश्वरलिंगमूर्तिर्विज्ञायते नित्यमिहैव लोके ॥

If one knows oneself, one is himself guru; one is himself Istalinga and one's own disinte-

restedness forms Jangama. When all these three are united in one, one becomes Kameswara Linga oneself.

भक्ति एम्बुदु बेरु· विरक्ति एम्बुदु मर· फलवेम्बुदु ज्ञान. पक्कके बंदित्तेम्बुदु अवधिज्ञान· तोट्टु बिद्दल्लि परमज्ञान· सविदल्लि आन्तर्यज्ञान. सुख तन्मयवादल्लि दिव्यज्ञान· दिव्यतेजस्सु हिङ्गिदल्लि परिपूर्ण. अदु महदोडलेम्बुदक्के एडेयिल्ल· भोगमल्लिकार्जुनलिंगवु अप्रमाणवाद कारण ॥ ३३ ॥

भक्तिर्मूलं विष्टरं स्याद्विरक्तिर्यच्च ज्ञानं तद्धि विद्धयाच्छलाटु ।
पक्वं ज्ञानं तच्च ज्ञेयं फलं तु भेदाऽज्ञानं मुक्तवृन्तं तदेव ॥
यद्यद्ज्ञानं भुज्यते त्वान्तरं तत् दिव्यं ज्ञानं तद्धि विद्धयात्सुखात्म ।
पूर्णं ज्ञानं यद्विलीनं स्वरूपे तद्वै पूर्णं ब्रह्मणा संविलीनम् ॥
सिद्धयत्येवं भोगमल्लेशलिंगं सर्वव्याप्तं ह्यप्रमाणं तदेव ।

Bhakti is the root of salvation. Dispassion is the tree. Knowledge is the fruit. Its ripening is avadhignana or the knowing of its having a limit. If it drops from the tree, it is paramajnana or the unlimited knowledge. When it is tested by oneself, it is antaryajanana or introspective knowledge. When it becomes intensive happiness, it is Divyajnana or blessed knowledge. When the intensity subsides, it is

paripurna or perfect knowledge. That constitutes All-pervasive and Immeasurable Bhogamallesha Linga. To reach this state while alive is the aim of salvation.

एवं अध्यात्मव्यवसायमूलाया: भक्तेर्महत्त्वं कथयति—

कणव निश्चैसिद सुभटङ्गे मनेय मेलण हङ्गुण्टे? अर्थ प्राण अभिमान ई मूरनु कर्तंगे इत्तु मत्ते होत्तु होरेवंगे सद्भक्तियुण्टे? अदु चन्देश्वरलिंगक्के मुट्टद माट ।। ३४ ।।

युद्धाय निश्चित्य भवेत्सुयोद्धा तस्यास्ति गेहोपरि किं तु मोह:? ।
असूनथार्थानथ चाप्यहङ्कृतिं समर्प्य पत्यै पुनराददीत ।।
यस्तस्य सद्भक्त्युदय: कदा नु? चन्देशलिंगाय न रोचते स: ।

Men who have surrendered themselves to God would have no family worries and anxieties. When life, wealth and desires are all surrendered to God, the devotee cannot get worried about Him. A warrior who has decided to fight in the battlefield should never think of his house. If one who has surrendered one's possessions to God would think of them again, one would not be blessed with devotion. If so, he is not to the taste of Chendesvralinga.

सामान्यमानवानां अनुभावप्राप्तिप्रकारं निरूपयति—

" नानेल्लिंद वंदे, ननगी देह बंद परि आवुदु· इन्नु मुन्दे

एय्दुव गति यावुदु " एम्ब नित्यानित्यविचार हुट्टदवरिगे एन्देन्दिगू बळलिके बिडदु, निजगुरुस्वतन्त्रसिद्धलिंगेश्वर. नीवु बरिसिद भवान्तरदल्लि बरुतिहरागि नानु कण्डु मरुगुतिर्देनु ।। ३५ ।।

कुतोऽहमत्रागत एष देहः कथं च लब्धोऽत्र गतिश्च कीदृशी ।
लब्धा मयेत्यात्मविचारशून्यं खेदो न चैवाद्य जहाति नित्यम् ॥
भवान्तरे संसरतश्च जीवान् दयस्व भृत्यान्गुरुसिद्धलिंग ।

Those we do not seek to know about their origin, means and destination are sure to be worried in life. I feel pity when I see mankind struggling hard aimlessly in bondage.

रोगिगे हालु सिहियप्पुदे ? गूगेगे रवि लेसप्पुदे ? चोरङ्गे बेळकु गुणवप्पुदे ? भवसागरद समयदल्लिप्परु निर्भावन भाववनेत्त-वल्लरु सिद्धलिंग ! इल्ल इल्ल एम्बे ॥ ३६ ॥

रुग्णस्य दुग्धं मधुरं किमु स्यात् घूकस्य भास्वानपि किं प्रियः स्यात् ?।
चोरस्य चांद्री किमु सौख्यदा स्यात् ? संसारमग्नस्य कुतोऽनुभावः ? ॥
निर्भावभावं किमु वेत्ति जीवः संसारमग्नो ? गुरुसिद्धलिंग ! ।

Milk is not sweet to the sick. The sun is not good to the owl. Moonlight is not welcome to the thief in the night. So sinners cannot find pleasure in God.

देवः सर्वगोऽपि न सर्वैर्ज्ञायत इत्याह अक्कमहादेवी--

वनवेल्ल नीवे· वनदोळगण देवतरुवेल्ल नीवे· तरुविनोळ-गाडुव खगमृगगळेल्ल नीवे· चन्नमल्लिकार्जुन! सर्वभरितनागि एनगे मुखदोरे ॥ ३७ ॥

इदं वनं सर्वमपि त्वमेव त्वमेव कल्पोपपदाश्च वृक्षाः ।
तत्राभिरामं विहरंत एते मृगाः खगाश्चापि भवत्स्वरूपाः ॥

You are the forest· You are all the trees. You are all the animals dwelling there· In spite of your being everything, You do not present yourself to me O Lord Sangamesha !

एतादृशमीश्वरमनुभवितुं आत्मनि परिहरणीयं वस्तु एकमेव। तदेव मनश्चाञ्चल्यम् । तदेव विवृणोति--

सुत्ति सुत्ति बंददिल्ल ; लक्ष गंगेय मिंददिल्ल. तुट्टतुदिय मेरुगिरिय मेट्टि कूगिददिल्ल· नित्यनेमदिन्द तनुव मुट्टिकोण्डडिल्ल. निच्चक्के निच्च नेनेव मनव, अन्दन्दिगे अत्तलित्त हरिव मनव चित्तदल्लि निलिसबल्लडे बच्चबरिय बेळगु गुहेश्वरलिंगवु ॥ ३८ ॥

पुनः पुनः पर्यटनान्न लभ्यते तथैव गङ्गाजललक्षमज्जनात् ।
आरुह्य मेरोः शिखरं समाह्वयन् देवं न चोपैति हि देहदंडनात् ॥
चलात्मकं चेन्मन एव चित्ते सन्धार्यते तत्र हि लिङ्गभावः ।

One may go on pilgrimages, bathe in sacred rivers, climb the holy mountains. All this will be of no use if the mind is not restrained· If the wavering mind is controlled

and centred in God, He will be well disposed and can easily be realised like the clear light.

तडेनेलेयिल्लद महानदियल्लि वडलिल्लद अम्बिग बन्दिदेने. हिडिव बिडुव मनव बेलेगोट्टडे कडेगणिसि हायिसुवे हेद्दोरेय. नुडियिल्लद निस्सीमन ग्रामदल्लिरिसुवेनेन्द अम्बिगरचौडय्य ॥३९॥

अनन्तपारं भवसागरङ्गतो मुक्ताभिमानस्त्वहमस्मि नाविकः।
गृह्णत्त्यजच्चितसमस्थितिश्चेत् पारं नयाम्येतदपारसागरात् ॥
अशब्दनिस्सीमपुरे यथा स्यात्तथाद्य कुर्यामिति चैडयार्यः।

Boatman Chowdaiah says "I, the formless boatman have come to the immeasurable and endless river of Samsara. If you can restrain your mind which is engaged in catching and abandoning the sensual pleasures, I will take You through this river to the abode of the Divine Lord who is speechless and limitless.

हसिवेम्ब हेब्बावु बसिर बंदु हिडिदोडे विषवेरित्तय्य आपादमस्तकक्के. हसिविगन्नवनिक्कि विषवनिळुहबल्लडे वसुधेयोळगाताने गरुडिग काणा रामनाथ ॥ ४० ॥

क्षुधात्मकस्याजगरस्य गर्भे संधारणादद्य विषं प्ररूढम् ।
आपादचूडं त्विममेव देहं संव्याप्य वर्तेत ; क्षुधः प्रसादात् ॥
विषं निरस्येत यदि क्षमायां तदा भवेन्मायिक एष नूनम् ।

O Lord Ramanatha! Hunger is a huge serpent whose poison spreads all over the body from food to the head. One who offers food for the hunger and makes the poison subside will be considered the real snake-charmer. (It is worthwhile that every one should try to be such a snake-charmer by God's grace).

मानसी आशैव व्यामोहकारिणी मायेति कथ्यत इत्याह—

होन्नु मायेयेम्बरु; होन्नु मायेयल्ल. हेण्णु मायेयेम्बरु; हेण्णु मायेयल्ल. मण्णु मायेयेम्बरु; मण्णु मायेयल्ल. मनद मुन्दण आशेये माये काणा गुहेश्वर ॥ ४१ ॥

स्वर्णं हि माया परिकथ्यते जनैः स्वर्णं तु माया न कदापि संभवेत्।
कांता च माया परिकथ्यते जनैः कांता तु माया न कदापि संभवेत्॥
भूमिर्हि माया परिकथ्यते जनैः भूमिस्तु माया न कदापि संभवेत्।
आशास्मदीया मनसस्तु माया सङ्कीर्त्यते तथ्यमिदं वदामि॥

The delusion of gold is not actually of gold but essentially of its desire. The delusion of woman is not of woman but of desire on her. The delusion of possessions is not of possessions but of desire on them. So the desire of mind is what is known as delusion.

एवं मनोनिग्रहद्वारा अधिगन्तव्यः सर्वाधिव्याधिनिवारकः सर्वविधविवेचनमूलभूतः आत्मानुभवः अधुना अस्मिन्नेव प्रसादरूपेण

परिणते देहे अवश्यं संपाद्यः। देहेन्द्रियसहकारेणैव भोगत्यागेन अयमनुभवो लब्धव्यः। परन्तु देहत्यागानन्तरं तादृशमनुभवं प्राप्तुं नः शक्यते। "इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः" इति श्रुतिराह। "सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया। यन्मुहूर्तं क्षणं वापि महादेवो न चिन्त्यते॥" इत्यनुभविनामुक्त्या प्रतिनिमिषं मनसि भगवद्ध्यानासक्तस्सन् मानवः देहेन कराभ्यां च जगत्कार्यं निर्वहेत्। ध्यानं विहाय कर्मैव यदि सदा कुर्येत तदा शान्तिर्न लभ्येत; जीवने समाधानं न विलसेत्। अत एव जीवन् पुरुषः स्वस्य प्रकृतिबन्धनाद्विमोचनं लब्धुं देवानुग्रह-प्राप्तये अत्रैव देवमर्चयेदिति शरणा वदन्ति। अतोऽस्मिन्नेव देहे मुक्तिसुखमनुभवितव्यम्। अत्र यदनुभूयते तदेव मरणादनन्तरमपि आत्मानमनुसरति; तत्रापि निरंतरं वर्तते। यदिहास्ति तदन्यत्र; यन्नेहास्ति तन्न कुत्रचित्। एवं रीत्या मानवदेहस्य उपयुक्ततां सम्यक् ज्ञात्वा अनायासेन मरणमधिगन्तुं दैन्यं विहाय भगवत्प्रियं भगवद्भक्तसम्मतं पावनं गौरवयुतं जीवनं निर्वहंतः साधका इहपर-सम्मतया रीत्या वसन्त्विति शरणा निरीक्षंते। तद्यथा—

सत्त बळिक मुक्तिय पडेदहेनेन्दु पूजिसहोदरे आ देवरेन कोडुवरो? सायदे नोयदे स्वतन्त्रनागि सन्दुभेदविल्लदिप्प, गुहेश्वर! निम्म शरण॥ ४२॥

प्रेत्यैव मुक्तिं हि लभेय चेति देवोऽर्च्यते चेत्स कथं प्रयच्छेत्।
गुहेश्वर त्वच्छरणस्त्वभूत्वा त्वयैकरस्यं खलु कामयानः॥

भेदं विहायाद्य चिदात्मबुद्ध्या वसेस्वतन्त्रः सुविराजमानः ।

If you are engaged in the worship of a Deity with a view to get salvasion after the disposal of the body, how can that Deity offer it to You ? O Lord Guheswara ! Your Sharana will realise it here, being free from death and pain, with no difference from You in the least.

सर्वदा शिवानुभवमेव अपेक्षमाणा शरणाग्रगण्या अक्क-महादेवी स्वीयां प्रार्थनामेवं प्रकटयति—

हिण्डनगलि हिडिवडेद कुञ्जर तन्न विन्ध्यव नेनेवन्ते नेनेवेनय्य. बन्धनक्के बंद गिळि तन्न बन्धुव नेनेवंते नेनेवेनय्य. कन्द नीनित्तबारेन्दु नीवु निम्मन्दव तोरय्य चन्नमल्लिकार्जुनय्य ॥

वृन्दाद्गृहीतस्तु गजो यथैव विन्ध्यं स्वकं चिंतयतीह नित्यम् ।
यथैव वद्धः शुक एष पञ्जरे स्वकीयबंधून् परिचिंतयेत्सदा ॥
तथा भवन्तं निरतं स्मरामि समाह्वयेमां भववीयदासीम् ।
वात्संल्यभावाद्भवदन्तरंगे संस्थापयेमां चनमल्लिकार्जुन ॥

O Lord Channamallikarjuna ! I think of You as an elephant, separated from the herd owing to its capture thinks of the Vindhya mountain. I think of you as a parrot kept in a cage thinks of its associaties. Please invite me to Your presence and show me Your form.

शरणाग्रेसरस्य बसवार्यस्य भगवत्प्रार्थना ह्येवं विलसति--

एन्दो संसारदन्दुग हिङ्गुवुदु ? एन्दो मनदल्लि परिणाम-वहुदेनगे ? एन्दो एन्दो कूडलसंगमदेव ! इन्नेन्दो ! परमसंतोष-दल्लिहुदेन्दो ॥ ४४ ॥

कदा निवर्तेत मदीयदुःखं ? कदा च चित्ते परिणाम एयात् ? ।
कदा लभेऽहं परमात्मसौख्यं ? कदा तथा स्यां ? गुरुसंगमार्य ॥

When does this annoyance of bondage vanish ? When shall I get solace to my anxious mind ? O Lord Sangama! When shall I get that opportune moment ? When shall stay in ecstasy ?

सूर्योदयवागि तिमिर उण्टे हेळा ? परुषवेधिय साधिसिदवंगे दारिद्र्यवुण्टे हेळा ? शिवज्ञानसंपन्ननाद ज्योतिर्मयलिंगिगे अंगवुण्टे, निजगुरुस्वतंत्रसिद्धलिंगेश्वरने तानादवंगे ? ॥ ४५ ॥

सूर्योदयादप्यभितस्तमः किं वर्तेत ? संसाधयतो मणेस्तु ।
किमस्ति दारिद्र्यम् ? अतश्च योगिनो ज्योतिस्स्वरूपस्य किमङ्गमस्ति? ॥
यः स्यात्स्वतन्त्रो गुरुसिद्धलिङ्गः तस्मिन्किमास्ते भवपाशकर्म ? ।

Please tell me whether darkness exists when the sun rises and whether there is poverty to one who knows the art of converting a metal into gold owing to the contact of Parusha. Can an enlightened soul be affected by the bodily

paims? If a devotee has become Svatantra Siddalinga himself with the devotional practices, can he feel the presence of the body?

शिवानुभवाल्लब्धव्यं फलविशेषमत्र स्पष्टयति मडिवाळमाचर्य्यः—

तनु नष्ट, मन नष्ट, नेनहु नष्ट, भाव नष्ट, ज्ञान नष्ट, इन्ती पञ्चदोळगे ना नष्टवादेनु. आ नष्टदोळगे नी नष्टवादे. कलिदेवर देवनेम्ब नुडि निःशब्दं ब्रह्म उच्यते ॥ ४६ ॥

नष्टश्च देहो मन एव नष्टं स्मृतिश्च नष्टा तत एष भावः ।
नष्टं च ज्ञानं तत एव नष्टः पञ्चात्मकोऽहं कलिदेवदेव ॥
नष्टे मयि त्वं च तथैव नष्टः ततश्च निश्शब्द इहोच्यते शिवः ।
चिदात्मके देव इहाभियुक्तः सन्तिष्ठ एवाद्य वियोगशून्यः ॥

After selfrealisation, one becomes unaware of one's body, mind, memory, existence, and knowledge. Though they exist around him, they are as good as nonexistent. When these five cease to exist, I forget myself and yourself. When I lose all contact with me or you, I remain speechless, O Lord Kalideva!

तनुवळियित्तु, मनवळियित्तु, भाववळियित्तु, बयकेयळियित्तु, निजवेम्बुदळियित्तु. नानु सीमेय बयलल्लि कलिदेवर देवनल्लि बेरसि बेरिल्लदिद्देनु ॥ ४७ ॥

तनुर्विनष्टा मन एव नष्टं भावो विनष्टश्च तथैव वासना ।
निजस्वरूपं तु विलीनमेव सीमातिगे वस्तुनि ज्योतिरूपे ॥

When I am united with Lord Kalideva, I cannot remain separate from him. My body, mind, existence, desire and the so-called form are almost nonexistent. Hence I remain in the open surface of the Inmeasurable field of Bliss.

एवं च शिवानुभविनः "अहं त्वं" इत्यादयः सर्वेऽपि भावा-विनश्यन्ति । स्वपरज्ञानशून्यः केवलः सच्चिदानंदः सन् सः लोक-हितार्थमेव स्वस्थो निवसतीति फलितम् ॥

"मन एव मनुष्याणां कारणं बन्धमोक्षयोः" इत्यनुभ-व्युक्तया दिशा आदय्यनामा शरणः स्वाशयमेवमाह––

सकलेन्द्रियगळल्लि विकारिसुव मनव सेळेदु निन्दातने सुखि. पञ्चेन्द्रियगळिच्छेयल्लि कीळुमनंगोण्डु सुळिवात दुःखि. मनस्सु बहिर्मुखवागलु मायाप्रपञ्चि. मनवन्तर्मुखवादरे अविरळज्ञानि. मनवु महदल्लि निन्दिरलात मुक्तनु. मनोलयवादरे सौराष्ट्र-सोमेश्वरलिंगदल्लि अभेद्यनु ॥ ४८ ॥

सर्वेन्द्रियेष्वेव चरन्मनस्तु दृढं समाकृष्य य एव तिष्ठेत् ।
सुखी स एवाद्य मनोऽभिपञ्चाच्चरत्यधोदृष्टिरत्र हि दुःखी ॥
य एव चित्ताद्बहिरेव सञ्चरेन्मायाप्रपञ्चीति निगद्यते सः ।
यदा मनस्त्वन्तरदृष्टि भूयात्तदा पुमान्स्यादमितज्ञ एव ॥

मनो यदा तिष्ठति ब्रह्मभावे तदा पुमान्मुक्त इतीर्यते बुधैः ।
मनोलयादेवमभेदमेति सोमेशलिङ्गैक्य इहैव मुक्तः ॥

Happy is he who stands brave with the restraint of his mind roaming about the organs of sense. Miserable is he who yields to sensual indulgence with his untrained mind. When mind turns outward, one becomes worldly. When it turns inward, one becomes enlightened. When it stands united with the universal spirit, one becomes liberated from all kinds of bondage. When mind becomes nonexistent, one gets united with Lord Someshalinga.

एवं मनस्संस्कारादेव मानवस्य सुखित्वं दुःखित्वं चाभिव्यज्यते । अल्लमार्योऽप्येवमेव मनसो दिव्यमलङ्करणं निर्दिशति—

भूमि निन्नदल्ल. हेम निन्नदल्ल. कामिनि निन्नवळल्ल-अदु जगक्किक्किद विधि. निन्नोडवे एम्बुदु ज्ञानरत्न. अन्तप्प दिव्यरत्नव केडगुडदे आ रत्नव नीनलङ्करिसिदेयादडे नम्म गुहेश्वरलिंगदल्लि निन्निंद बिट्टु सिरिवंतरिल्ल काणा एले मनवे ॥ ४९ ॥

चित्त मदीयं शृणु वाक्यमेतत्त्वदीयसौन्दर्यविधायकं तत् ।
न तेऽस्ति भूमिर्न च वित्तमेव न चापि कान्ता जगदर्पितं तत् ॥
चिदात्मकं पावनरत्नमेव त्वदीयमेतन्न विनाशय त्वम् ।
अनेन चेद्भूषयसि त्वमेव तदा गुहेशप्रियतामुपैषि ॥

O mind ! Earth, gold and woman do not belong to you. They are all meant for the world. The so-called ornament of you is the precious gem of knowledge. If you can adorn yourself with this gem without getting it polluted, you will become one with Lord Guhesha. Then, there will be no other fortunate entity than you.

एवं जितमनसा योगिना देह एवानुभूयमानं लिंगस्वरूपमाह–

तनुविनल्लि निर्मोह, मनदल्लि निरहङ्कार, प्राणदल्लि निर्भय, चित्तदल्लि निरपेक्ष, विषयदल्लि उदासीन, भावदल्लि दिगम्बर, ज्ञानदल्लि परमानन्द नेलेगोंड बळिक सौराष्ट्रसोमेश्वरलिङ्ग वेरिल्ल काणिरो॥

तनौ च निर्मोह इहास्ति यस्य तथैव चित्ते निरहंकृतिस्तु ।
प्राणेऽस्ति चेन्निर्भयता तथैवाऽनपेक्षता चेन्मनसि स्थिता स्यात् ॥
औदास्यता चेद्विषयेषु भावे दिगिम्बरत्वं खलु विद्यते चेत् ।
ज्ञाने यदि स्यात्परमः प्रमोदः तदा स सोमेश्वरलिङ्गमेव ॥

He who remains unaffected in bodily ailments, free from vanity in mind, fearless in heart, desireless in worldly achievements, disinterested in sensual pleasures, naked in oneself is no other than Someswara Linga Himself.

एवं जीवत एव ब्रह्मभावमनुभवतस्तु देह एव देवालयः स्यादित्याह षण्मुखस्वामी—

देहवेम्ब देगुलदोळगे भावसिंहासनव माडि जीवदोडेयन पूजिसवल्लव देवरिगे देवनेम्बेनय्य अखण्डेश्वर ॥ ५१ ॥

देहाख्यदेवालय एव नित्यं भावाख्यसिंहासनकल्पनेन ।
अखण्डदेवं प्रभुमर्चयेद्यः देवस्य देवः स हि विश्रुतः स्यात् ॥

O Lord Akhandesha ! One who imagines the presence of divine seat in one's temple-like body and worships the master of oneself, deserves to be treated as being enlightened.

एवं देहरूपे देवालये शिवस्वरूपी जीवः शिवानुभवं लब्ध्वा स्वीययोगक्षेमयोः शिवैककारणत्वं यथा भावयतीत्यमुमंशं स्पष्टयति—

एन्न योगक्षेम निम्मदय्य. एन्न हानिवृद्धि निम्मदय्य.. एन्न मानापमान निम्मदय्य· बळ्ळिगे काथि दिम्मित्त? कूडलसङ्गमदेव ॥

मदीययोगो भवदीय एव तथैव क्षेमो भवदीय एव ।
मदीयवृद्धिश्च तथैव हानिर्मानोऽपमानो भवदीय एव ॥
क्षुरस्य भारः किमयं शलाटुः ? त्वमेव सञ्चिन्तय सङ्गमेश ।

O Lord ! My achievement and protection are yours. My destruction and prosperity are yours. My respect and insult are yours. Can the seed become a burden to the creeper ?

प्रापञ्चिको जनः दुर्वर्तनेन विषयसौख्यमेव अन्वेषयन् कालं यापयतीति विषादस्थानमेतत् । तदानीन्तनस्य जनस्य दुराचारमवलोक्यैवं विषादमभिव्यनक्ति देवरदासिमार्यः—

शिवपूजेयेत्त विषयद सवियेत्त ? आ विषयद सवि तलेगेरि, शिवपूजेय बिट्टु वेशियर एञ्जल हेसदे तिम्ब दोषिगळनेनेम्बे रामनाथ ॥ ५३ ॥

शिवार्चनं क्वाप्यथ भोगमोहः ? तं चापि मोहं शिरसाऽभिनन्द्य ।
पूजां विहायाथ नरोऽभिषङ्गात् वेश्याजनस्याप्यथ भुक्तभोगात् ॥
य एव दोषग्रथिताश्चरन्ति किमत्र ते सच्चरिता भवेयुः ? ।

Can Divine worship and sensual taste come into contact with each other ? What can be said about those who devote themselves solely to the sensual taste, give up the Divine worship and shamelessly swallow the food left out of the mouth of the courtezans ?

परमानन्दमपेक्षमाणस्य अनुभविनः दैनन्दिनप्रार्थनामाह--

संसारसुखवेत्त ? निम्म निजसुखवेत्त ? कत्तले एत्त ? बेळगेत्त ? एन्न अन्तरंगदोळगिर्दु तोरुवे अडगुवे. इदेनु गारुडिगतन. एनगे सविहालुसक्करेयनुणगलिसि बेवनुणिसिहेनेन्दडे अदु हितवहुदे ? निन्न निजसुखव सविकलिसि संसारसुखवनुगिसिहेनेन्दरे अदु मनकोम्बुदे ? एन्नोडने विनोदवेके ? ननगे बेड बेड. एन्न नीनरिदु सलहु. निनगे एन्नाणेयय्य निजगुरुस्वतन्त्रसिद्धलिंगेश्वर ॥ ५४ ॥

संसारसौख्यं क्व परात्मसौख्यं ? तमः क्व ज्योतिः क्व ? वद त्वमेव ? ।
मदन्तरंगे प्रतिभासि लीयसे किमेतदाचक्ष्व तवेन्द्रजालम् ? ॥

गव्यं पयः शर्करया समेतं मां पाययित्वा पुनरेव निम्बम् ।
तिक्तं समास्वादयितुं न युक्तं; त्वदीयसौख्यानुभवं प्रदर्श्य ॥
संसारमोहं परिकल्पसे चेत् हितं तव स्यात्कथमित्यवेहि ? ।
मया विनोदं कुरुषे कुतस्तु ? मा माऽस्तु मह्यं गुरुसिद्धलिङ्ग ॥
ज्ञात्वाद्य मां रक्ष निरंतरं त्वं वदामि शंभो स्थिरचित्त एव ।

Can sensual pleasure be mixed with spiritual happiness? Can darkness come into contact with light? In spite of your existence in my heart, You are visible as well as hidden. Who will understand your trick? Is it worthy of you to make me swallow the margosa juice after training me to taste the milk with sugar? Does it suit your mind to leave me at sensual enjoyment after getting me acquainted with spiritual experience? O Lord! Please favour me with your kind glance and protection.

एतादृगनुभवयुक्तानां शरणानां स्तुत्या गीतेयमुपसंह्रियते—

अय्या! निम्म शरणरु इद्द पुरवे कैलासवय्य. अय्य निम्म शरणरु निन्दुदे निजनिवासवय्य. चन्नमल्लिकार्जुनय्य । निम्म शरण बसवण्णनिद्द क्षेत्र अविमुक्तक्षेत्रवागि आनु बसवण्णन श्रीपादक्के नमो नमो एनुतिर्देनु ॥ ५५ ॥

अयि त्वदीयाः शरणाश्च पूताः स्पृशन्ति यां भूमिमियं पवित्रा ।
तथैव ते यत्र वसन्ति नित्यं कैलास एवेति हि विश्रुता सा ॥

तिष्ठन्ति ते यत्र तदेव पीठं त्वदीयवासो भवति ध्रुवं तत् ।
यत्रैव तिष्ठेच्चनमल्लिकार्जुन ! भवत्प्रपन्नो बसवार्य एषः ॥
तदेव भाव्यं ह्यविमुक्तक्षेत्रं तदीयपादोऽस्तु मदीयमस्तके ।

O Lord Chanamallikarjuna! That part of the earth touched by your mystics is a holy one. That part of the country where they dwell is Kailasa itself. The spot where they actually stand is the residence of you. That part of the land where the mystic Basava resides is a sacred place of pilgrimage. Hence I feel happy to prostrate before his worthy feet.

अय्य ? निम्म शरणर निलव स्वर्गमर्त्यपाताळदोळगे बल्लवरिल्लवय्य. अघटितघटनरु अखण्डितमहिमरु निजदल्लि निर्लेपभावकरु. सङ्गमदेव ! निम्म शरणर निलवनरिवडे नानेतरवनय्य॥५६॥

देव ! त्वदीयान्शरणांश्च तत्त्वशः न कोऽपि जानाति पुरत्रये च ।
अखण्डितस्तन्महिमानुभावो ह्यपूर्व एषां घटनाविशेषः ॥
यथार्थतस्त्वेव निरञ्जनास्ते कथं नु जानामि तदीयवृत्तम् ? ।

Lord Sangama! None in heaven, earth and netherland can know the worth of your mystics. How incomparable is their greatness and competence! They can exist freely any where and everywhere. Hence, who am I to understand their stand point?

## वचनानां अकारादिपट्टिका

---

# पाठशोधनिका

—o—

| पुटे | पङ्क्तौ | शुद्धः पाठः | पुटे | पङ्क्तौ | शुद्धः पाठः |
|---|---|---|---|---|---|
| 8 | 22 | blessings | २४ | १२ | इत्येव सिद्धं |
| 9 | 5 | detachment. | २४ | १५ | omit 'in' |
| 9 | 5 | इत्याशिषं | २५ | १८ | enable the aspirant |
| 11 | 1 | inertness, | २६ | १२ | विमथ्य |
| 14 | 1 | एतत्सात्विकवस्तूप- | २७ | १४ | परित्यजेत्साधक |
| 14 | 13 | लोककल्याणलीलां | २९ | १३ | साध्येत |
| 14 | 15 | स्वीय | ३० | १ | भ्युदयौ |
| ४ | २ | अनिवार्यमेव | ३० | ७ | तोख्वुदु |
| ६ | १६ | सर्वदेवात्मकस्य | ३० | ११ | omit 'चेत्' |
| ११ | ११ | भवन्त्विति | १३ | ४ | becomes. |
| ११ | १४ | वीरशैवपदं | ३२ | २१ | मोहाहङ्कार |
| १२ | ७ | भेदसत्त्वात् | १५ | १८ | succumb |
| ५ | १७ | योस्तयोरेकत्र | ६७ | १३ | हन्यसे त्वं |
| १५ | १७ | शिवसत्क्रिया | ६७ | १३ | God wishes |
| १८ | २० | मनःकार्श्यमुपैति | ७२ | १० | चाक्रोशकमेव |
| २२ | ७ | realise the same | ७५ | १९ | गिरिश ! प्रणष्टः |
| २३ | ७ | सुविचिन्त्य | ७८ | ४९ | निजार्थवेदिनः |

| पुटे | पङ्क्तौ | शुद्धः पाठः | पुटे | पङ्क्तौ | शुद्धः पाठः |
|---|---|---|---|---|---|
| ९६ | ९ | distinct | १७५ | १० | शिष्येण |
| ९८ | ११ | wishes well | १७६ | ६ | किन्तु किन्तु |
| १०१ | ७ | Divine Light | १७८ | १६ | offer me |
| ,,०२ | ११ | कर्णेऽभिजातः | १७९ | १५ | you meditate |
| ,,०८ | ११ | stallion | १८३ | २ | omit स्वानुभवं |
| ,,२१ | १३ | engaged | १८६ | ७ | चैवं विज्ञायते |
| ,,३५ | १२ | संवीक्ष्य | ,, | १० | पुनर्देहागमनं |
| ,,३६ | १४ | प्राणभावनया | ,, | १० | इत्युच्यते |
| ,,३७ | ४ | योनित्वाच्च | १९९ | ५ | बिभेतीत्याह |
| ,,४१ | २० | for those other than | २०१ | ५ | नोडा |
| ,,४३ | १९ | गुरुभक्त | २०६ | १२ | भिमतिर्यदि बद्धा |
| ,,४९ | १९ | सर्वाण्यपि | २०८ | ९ | विद्याच्छलाद्गुः |
| ,,५७ | ४ | स्वीयं गन्धं किन्तु | २१४ | २१ | त्वच्छरणस्त्वमृत्वा |
| ,,५९ | ११ | मनुते यदाङ्गं | २१५ | १ | वसेत्स्वतन्त्रः |
| ,,६० | १९ | गुरुकूडलार्ये | २१५ | ३ | salvation |
| ,,६८ | ३ | विद्येत। निवसेत् | २१५ | २० | as a parrot |
| ,,७० | ११ | O Lord ! | २१७ | १ | pains |
| ,,७१ | १४ | कायकात् | २१८ | ८ | सर्वेऽपि भावाः |

## Books Published in Murugharajendra Granthamala Chitaldrug

1. Svetasvataropanishad Veerasaiva Bhashyam.
2. Bhagavadgitaveerasaivabhashyam
3. Shivatathvaratnakara I Part

## Books Under Print

1. Atharvashikhopanishad Veerasaiva Bhashyam.
2. Basava Gita
3. Akkamahadevi Gita
4. Shivatattvaratnakara II Part